संस्कृतविद्यापीठग्रन्थमालाया एकोनशीतितमम्पुष्पम्

55

श्रीमाधवाचार्यप्रणीता

# जैमिनीयन्यायमाला

## प्रकाशिकाव्याख्यायुता

( प्रथमः प्रमाणाध्यायः )

व्याख्याकारः

डॉ. प्रभाकरप्रसादः




श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः )

नवदेहली-110016

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ग्रन्थपरिचयः

जैमिनीयन्यायमालाख्योऽयं ग्रन्थः पद-वाक्यप्रमाणानां परम्परामुपेयुषां श्रीमाधवाचार्याणां मीमांसासागरे प्रवेशायाधिकरणसारबोधनार्थं कृतितल्लजरूपेण दर्शनजगति विराजत इति समेषां विदितमेत। तस्य सरलव्याख्या जैमिनीयन्याय-मालाप्रकाशिकाख्या छात्राणां सुबोधाय, विदुषां मुदे शास्त्रदीपिकाभाट्टदीपिकादिग्रन्थानां तत्तदधिकरण-व्याख्याने सूक्ष्मेक्षिकया मतभेदानां निरूपणपरा गुरुमतानुसारेणापि विषयप्रतिपादनपरा ग्रन्थकारेण प्रभाकरप्रसादेन प्रणीता। एतद्व्याख्यानेन सह मूलग्रन्थस्यावलोकनेन मीमांसाधिकरणानां विवेचनं सुस्पष्टं भवतीति धिया व्याख्येयं समारब्धा।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संस्कृतविद्यापीठग्रन्थमालाया एकोनशीतितमम्पुष्पम्

श्रीमाधवाचार्यप्रणीता

# जैमिनीयन्यायमाला

## प्रकाशिकाव्याख्यायुता

(प्रथमः प्रमाणाध्यायः)

प्रधानसम्पादकः
प्रो. राधावल्लभत्रिपाठी
कुलपतिः

व्याख्याकारः
डॉ. प्रभाकरप्रसादः



श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# भूमिका

विदन्त्येव विज्ञा यद् विश्वस्य ज्ञान-विज्ञान-विमर्शपरम्परासु अतिमहदवदानं वरीवर्त्यते भारतीयप्रज्ञायाः। अस्या प्रज्ञायाः परमप्रकर्षं विभावयामः अस्माकं शास्त्रपरम्परासु। एताश्च शास्त्रपरम्परा आवेदेभ्यः प्रसृता अद्यावधि विकासं यान्तीति न संशीतिः। विद्- ज्ञाने, विद्- सत्तायाम्, विद्लृ लाभे तथा विद् - विचारणे इति धातुचतुष्टयविनिष्पन्नो वेदशब्दः चतुरस्रतां ज्ञानप्रवाहस्य द्योतयति। विदन्ति जानन्ति, विद्यन्ते भवन्ति, अथवा विन्दन्ते लभन्ते, विन्दन्ति विचारयन्ति सर्वे मनुजाः सत्यविद्यां यैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः- इति ऋषिदयोनन्दोक्तेः। वेद्यते ज्ञायते अनेनेति वेदः इत्युक्त्यापि वेदस्य ज्ञानस्रोतस्त्वं सिध्यति।

अथैतेषां वेदानाम् अतिप्राचीनकालात् शाखा-चरण-परिषद्भिः संरक्षणं प्रसारश्च समजायत। तथैव शाखा-चरण-परिषत्सु शास्त्रपरम्पराऽपि प्रसारं विकासं चापेदे। संहितानां शाखास्तासु तासु गुरुशिष्यपरम्परासु अभ्यस्ताः। चरणशब्दः शाखा- विशेषाध्ययनपरैकतापन्नजनसङ्घवाची' इति जगद्धरोक्तेः शाखाविशेषमधीयानां जनानां समाजश्चरण इति न्यगद्यत। तथा चरणानां सङ्घा एव परिषदिति प्रोक्ताः। परिषत्सु विज्ञाः पण्डिता अवश्यं भवेयुरिति व्यवस्था आसीत्। दर्शन-तर्क-धर्मशास्त्रादिष्वबाह्या एकविंशतिर्विप्राः प्रत्येकं परिषदि स्युरिति मनोः याज्ञवल्क्यस्य च लक्षणात्। परिषदि अभ्यस्ताः ग्रन्थाः पार्षदा इत्यहिताः।

अस्या ज्ञानपरम्परायाः महिमा उपनिषत्सु परां काष्ठां ययौ। उपनिषत्सु वेदप्रतिपाद्यब्रह्मविद्यायाः पुनः सन्धानं विहितम्, तत्कृते च गुरुशिष्यपरम्पराप्रथिता काऽपि संवादशैली ऋषिभिराविष्कृता। इयं शैली दार्शनिकीं पद्धतिमेव प्रथयति। प्रश्नोऽनुप्रश्नोऽनतिप्रश्ननिवारणं व्याख्याऽनुव्याख्या दृष्टान्त आख्यायिकोर्ध्वप्रवचनं चेत्यष्टावस्याः अङ्गानि सन्ति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आवेदेभ्यः प्रसृतायामस्यां परम्परायां नाना ज्ञानधाराः परम्परं सङ्गच्छन्ते संवदन्ति च। तथाहि - षड्वेदाङ्गानि, आस्तिकनास्तिकदर्शनसम्बद्धाः परःसहस्रं ग्रन्थाः आयुर्वेदाद्युपवेदग्रन्थास्तथा च काव्यशास्त्रललितकलाविषयकं वा साहित्यमिति सर्वथा निरवधिर्वरीवर्ति सुरसरस्वत्याः साहित्यभाण्डागारः। तत्रापि मीमांसादर्शनस्य वर्तते अनितरसाधारणो महिमा। एतद्दर्शनपरम्परायां प्रकाशमायाति जैमिनीयन्यायमालाख्यो ग्रन्थः विद्वद्वरेण्येन प्रभाकरप्रसादेन साधु सम्पादितः। एतदनुत्तमं ग्रन्थरत्नं प्रकाशयन्तो मुदमनुभवामः, अस्य ग्रन्थस्य प्रसिद्धिं समुपादेयतां च आशास्महे। एतत्प्रकाशनसमायोजनाय विद्यापीठस्य शोधप्रकाशनविभागाय सम्यङ् मुद्रणाय च मुद्रकायापि साधुवादान् वितरामः।

**राधावल्लभः त्रिपाठी**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# सम्पादकीयम्

भारतीयदर्शनेषु मीमांसादर्शनमनितरसाधारणं दर्शनम्, यतः सर्वेषु दर्शनेषु ये विचारा मोक्षोपयोगिनस्ते सर्वेऽप्यत्र तर्कपादे देहातिरिक्तस्याऽऽत्मनो निरूपणप्रसङ्गे वैदिककर्मानुष्ठानोपयोगितासिद्ध्यर्थं प्रतिपादिता एव, एतद्विहाय वैदिककर्मानुष्ठानस्य याथातथ्येन स्वरूपनिर्णार्थं ये न्याया विचारितास्ते व्यवहारेऽपि सर्वेषु क्षेत्रेषु अप्रतिहतरूपेण सञ्चाराय प्रभवन्तीत्यत्र नास्ति संशीतिलेशः। प्रथम एवाधिकरणेऽत्र "स्वाध्यायोऽध्येतव्यः" इति विध्यर्थ-विवेचनपुरस्सरं वेदाध्ययनमर्थज्ञानार्थमर्थज्ञानञ्चासन्दिग्धं मीमांसान्यायैकनिर्णेय-मतः एवच्छास्त्राध्ययनं विहितत्वान्नित्यमिति मीमांसादर्शनस्य तर्कशास्त्रत्वं वेदाध्ययनवदवश्याध्येयत्वं निर्णीतम्। उक्तञ्च "मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः"। "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धमंवेद नेतरः।" इति। एवञ्च केवलं श्रद्धामात्रनिबन्धनमिदं शास्त्रं नास्त्यपि तु सदसद्विवेचनपरं शास्त्रमिति स्पष्टं वक्तुं शक्यते। एतच्छास्त्रं द्वादशाध्यायात्मकमतः द्वादशलक्षणीति प्रसिद्धिः। द्वादशाध्यायेषु क्रमशः धर्मे प्रमाणम्, भेदः, शेषत्वम्, प्रयुक्तिः, क्रमः, सामान्यातिदेशः, विशेषातिदेशः, ऊहः, बाधः, तन्त्रम्, प्रसङ्गश्चेति द्वादश विषया विवेचिताः। अत्र उत्पत्तिविधिः विनियोगविधिः प्रयोविधिरधिकारविधिश्चेति चतुर्धा विधिभेदैः षडध्यायपर्यन्तं प्रकृतियागानामर्थाद् येषां कर्मणां समग्राङ्गोपदेशः वैदिके प्रकरणे दृश्यते तानि कर्माणि प्रकृतिकर्माणि प्रकृतियागाः इत्युच्यन्ते तेषां स्वरूपं सविस्तरं कर्मण्यस्मिन् किं प्रमाणभूतं वाक्यम्? किञ्चास्य स्वरूपम्, केऽत्राङ्गानां विनियोगाः, कश्च क्रमोऽत्राश्रीयते, कथं प्रयोगानुष्ठानं के चास्मिन् कर्मणि अधिकारिण इति वर्णितम्। सप्तमाध्यायाद्दशमाध्यायं यावद्विकृतियागानामर्थाद्येषां कर्मणां वैदिके प्रकरणे स्वरूपमेवोपभ्यते न तु तत्कर्मानुष्ठानापेक्षिताङ्गानां वर्णनं दृश्यते तानि कर्माणि विकृतिकर्माणि विकृतियागा इत्युच्यन्ते तेषामनुष्ठानं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कथं कार्यमिति निरूपणार्थं प्रकृतियागेभ्योऽतिदेशेनानुष्ठेयपदार्थानां प्राप्तिः केन द्वारेण भवतीति अतिदेशोहबाधानां विस्तरेण चर्चा कृता। अन्ते एकादशद्वादशाध्यायाभ्यां कर्मानुष्ठाने समयलाघवस्य सामग्रीणां लाघवस्य च सिद्ध्यर्थं तन्त्रप्रसङ्गयोर्बहुधा विचारः कृतः। अत्रोक्तसिद्धान्तानां लौकिकसंस्थास्वपि प्रबन्धनं कथं विधेयमिति निर्णयार्थमुपयोगिता भवत्येवेत्यत्र नास्ति सन्देहस्यावकाशः। इदं मीमांसाशास्त्रं प्रायः सहस्राधिकरणगर्भं प्रत्यधिकरणमनेकसूत्रघटितं सागरतुल्यं बहुविद्यागर्भितं परमगम्भीरम्। अस्य सुखेनावगाहनार्थं पदवाक्यप्रमाणकोविदैः श्रीमाधवाचार्यैः सहस्रद्वयपरिमितश्लोकैः जैमिनीयन्यायमालाख्यः प्रकरणग्रन्थः व्यरचि। तदपि सम्प्रति छात्राणां सुखेन बोधो न भवतीति धिया सरलव्याख्यानमपेक्षितमिति व्याख्याकारेण प्रकाशिकाख्या काचन सरला व्याख्या कृता। इयं च व्याख्या प्रत्यधिकरणं किमस्य प्रयोजनम्, कर्मानुष्ठानेऽस्याधिकरणसिद्धान्तः कथमाश्रयणीय इति विवेचयति। क्वचिच्चार्थवादाधिकरणे विध्यर्थवादयोः पदैकवाक्यतापक्ष एव कर्ममीमांसकानां युक्तः, वाक्यैकवाक्यतापक्षः ग्रन्थकृदुक्त उत्तरमीमांसा-वासनयेति आकरग्रन्थानां विमर्शमुखेन मूलग्रन्थस्य समीक्षापि सविनयं व्याख्यायां कृता दृश्यते (पृ. सं. 33-37)। होलाकाधिकरणे वसन्तोत्सवादीनां सर्वेषामेव कृते धर्मत्वं न तु प्राच्यानामेवेति प्राच्यशब्दस्य प्राच्ये स्थिताः, प्राच्यप्रदेशादागताः, प्राच्ये भवा इति बहुधा व्युत्पत्तिसम्भवात् प्राच्योऽयमेवेति निर्णयस्याशक्यत्वात् शिष्टाचारानुमितस्मृतिश्रुतिवेद्यो धर्मः सर्वैरेवानुष्ठेय इति निर्णयः सम्प्रत्यपि पुनः पुनः विचार्यते चेत् भाषाभेदादिनिमित्तजन्य-विवादवारणायोपयोगी भवेदेव। तदेवं मीमांसाशास्त्रस्योपादेयता दर्शनक्षेत्रे लौकिकक्षेत्रेष्वपि अप्रतिहता, तच्छास्त्रप्रवेशाय जैमिनीयन्यायमालाया अध्ययनम्, तदर्थबोधाय प्रकाशिकाव्याख्यानस्य चाध्ययनं च नितरामपेक्षिते। एवञ्च शास्त्रमाहात्म्याद्विषयसारल्याच्च पुस्तकस्यास्य महत्त्वं सिद्ध्यतीति प्रतीयते।

**प्रो. रमेशकुमारपाण्डेयः**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# भूमिका

**वेदवाक्यैकमूलाय ब्रह्मणे परमात्मने।**
**यज्ञरूपाय देवाय प्रणमामि पुनः पुनः।।**

पदवाक्यप्रमाणशास्त्रेषु मध्यमणिन्यायेनाभ्यर्हितशास्त्रत्वेन वाक्यशास्त्राभिधं मीमांसाशास्त्रं विराजत इतिविदितमेव विदुषाम्। प्रत्यक्षादिप्रमाणैरनवगतेष्टानिष्टप्राप्तिपरिहारोपयबोधकवेदार्थविचारपरत्वमभ्यर्हितत्वम्। यद्यपि चोदनैकवेद्यो धर्म इति धर्मस्वरूपं वेदैकगम्यम् तथापि वेदेन विहितो धर्मः क इति निर्णय एतच्छास्त्राधीन इति मीमांसाशास्त्रस्यानितरसाधारणं वैशिष्ट्यमस्त्येव। एतच्च शास्त्रमनादिकालतः स्थितमपि साम्प्रातं जैमिनिमहर्षिप्रणीते दर्शनविशेषे रूढं दृश्यते। जैमिनिसूत्राणाञ्च भाष्यवार्त्तिकादिप्रबन्धैः व्याख्यानं कृतं यत्तद् विद्वद्गोष्ठीषु मीमांसाशास्त्रमिति सम्प्रति प्रथते। तेषां भावबोधाय सत्सु बहुषु शास्त्रदीपिकाद्यधिकरणग्रन्थेषु जैमिनीयन्यायमाला सारल्येन शास्त्रार्थप्रवेशाय द्वारभूतेति विद्वद्भिरेव गीयते। परन्तु तदुपरि सरलटीकाया अभावात् सामान्यछात्राणामवबोधाय काचन टीका भवेदिति धिया जैमिनीयन्यायमालाप्रकाशिकायाः प्रणयने मम प्रवृत्तिरुत्पन्ना। यथामति मया छात्राणं कृते लेखनसौकर्याय ग्रन्थार्थबोधसुलभाय च कार्यमिदं कृतम्, क्रियते च। सम्प्रति प्रथमाध्यायत्मको भागः प्रथमः मुद्राप्यत अस्मद्विद्यापीठस्य प्रकाशनविभागस्य कृपयेति मोमुद्यते मे चेतः। सन्दर्भेऽत्र संस्थायां सेवाकरणे मया येषां कृपयावसरः प्राप्तस्तेषां कुलपतिचराणां दिवङ्गतानां श्रीविद्यावाचस्पतीनां गुरुचरणानां चरणयोर्धन्यवादं सप्रणामं निवेदयामि। तथैतद्ग्रन्थमुद्रापणे प्रदत्तावकाशानां साम्प्रतिककुलपतिमहाभागानां प्रो. उषारानि कपूरमहाभागानां प्रकाशनविभागाध्यक्षाणां प्रो.रमेशकुमारपाण्डेयमहाभागानां तथा डॉ. ज्ञानधरपाठकमहाभागानां कृते सप्रणामं धन्यवादान् निवेदयामि। अमरप्रिंटिगप्रेस इत्यस्याधिकारिणां श्रीमतां हीरालालमहोदयानां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृतेऽपि धन्यवादान् निवेदयामि।

यदि केचन दोषाः मुद्रणजनिता ममाज्ञानजनिता वा स्युरेवातः कृपया क्षमां तदर्थं प्रार्थये, अग्रे च यथामति दोषाः यथा न स्युस्तथा प्रयत्नं करिष्यामीति च निवेदयामि।

अन्ते पुनः जगन्नियामकाय परमेश्वराय नमः।।

—प्रभाकरप्रसादः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीगणेशाय नमः

# विषयसूची

## जैमिनीयन्यायमालाप्रकाशिकायाः

**प्रथमपादः**



**द्वितीयपादः**



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"ॐ श्रीगणेशाय नमः"

प्रथमः पादः

# जैमिनीयन्यायमालाप्रकाशिका

अथातः श्रीसूर्यं गणपतिविभुं शङ्करमहम्
तथा दुर्गाम्बां श्रीहरिमिह मुदा सद्गुरुवरम्।
प्रणम्यादौ कुर्वे मतिजलधिविद्यावनयते-
र्नयानां मालाया विवरणमिदं जैमिनिमते॥ 1 ॥

क्वचाहं मन्दात्मा क्वच यतिवरो ज्ञानजलधिः
पदानां वाक्यानां प्रमितिकरणानामपि निधिः।
तथाप्यस्मिन् तन्त्रे विवरणकृतौ प्रेरयति माम्
रुचिर्यस्माज्ज्ञानं किल विषयतन्त्रं श्रुतिनये॥ 2 ॥

अतः स्मारं स्मारं गुरुवचनपीयूषमसकृद्
यथाज्ञानं भक्त्या मतिविमलतायै गुरुतमे।
प्रवर्त्तेऽस्मिन् कार्ये निगमनयशास्त्रार्थविषये
प्रकाशार्थं किञ्चिन्नतु बुधजनार्थं कथमपि॥ 3 ॥

गोकर्णक्षेत्रनिलयं द्विभुजं गणनायकम्।
चतुर्भुजञ्च विघ्नेशं सिद्धिदं प्रणमाम्यहम्॥4॥

मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते।
राजराजायते रिक्तो राघवेन्द्रं तमाश्रये॥ 5॥

कुतो वा नूतनं किञ्चिदहमुत्प्रेक्षितुं क्षमः।
वचोविन्यासवैचित्र्यमात्रमत्र निवेदनम्॥ 6 ॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्रन्थकृद्भावबोधो हि भवेत् सम्यङ्निरीक्षणे।
टीकाया एतदर्थं मे प्रयासोऽत्र प्रवर्तते।। 7 ।।

## जैमिनीयन्यायमाला

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृयाः स्युस्तं नमामि गजाननम्।। 1।।

## प्रकाशिका

इह खलु श्रीमाधवाचार्यः श्री जैमिनीयन्यायमालाग्रन्थारम्भे निर्विघ्नपरिसमाप्तये विघ्नेशप्रणामात्मकं मङ्गलश्लोकं निबध्नाति **वागीशाद्या** इति। वागीशः बृहस्पतिः सुमनसः देवा, सर्वार्थानामुपक्रमे-सर्वेषां कार्याणामारम्भ इत्यर्थः। अत्र मङ्गलाचरणं धर्मकार्यमित्यत्र शिष्टाचार एव प्रमाणम्। अस्मिन्नध्याये धर्मेऽष्टौ प्रमाणानि क्रमशः प्रतिपादयिष्यन्ते, तन्मध्ये शिष्टाचारोऽप्येकं प्रमाणम्। अतः शिष्टाचारप्रमाणादेव मङ्गलाचरणे धर्मत्वेन कर्तव्यता बुद्धिरुदेतीति नात्र ग्रन्थसमाप्तिमङ्गलाचरणयोर्मध्येऽन्वयव्यतिरेकव्यभिचारादिचर्चावसरः। "धर्मेण पापमपनुदति" इति भगवती श्रुतिरेव स्वयं प्रमाणभूता मङ्गलाचरणाख्यधर्मानुष्ठानेनापि दुरितनाशो भवत्येवेति बोधयति।

## जैमिनीयन्यायमाला

युक्तिं मानवतीं विदत् स्थिरधृतिर्भेदे विशेषार्थभाक्
आप्तोहक्रमकृत प्रयुक्तिनिपुण श्लाघ्यातिदेशोन्नतिः।
नित्यस्फूर्त्यधिकारवान् गतसदाबाधः स्वतन्त्रेश्वरो
जागर्तिश्रुतिमत् प्रसङ्गचरित श्रीबुक्कणक्ष्मापतिः।। 2।।

## प्रकाशिका

एवं देवतानमस्कारात्मकं मङ्गलाचरणानन्तरं वस्तुनिर्देशात्मकं मङ्गलाचरणं श्लोकेन निबध्नाति-युक्तिमिति। महाराजेन राज्यं कथं पालनीयमिति राजनीतिवृत्तं ग्रन्थकारेणात्र सम्यक् प्रतिपाद्यते। राज्यपालनञ्च शत्रुभ्यो राज्यस्य रक्षणं प्रजानामपेक्षितस्य साधनस्य सुलभतया व्यवस्थापनेन प्रजापालनञ्चाधिकृत्य भवति। तत्र परराज्येभ्यः स्वराज्यस्य रक्षणार्थं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सामभेददानदण्डाख्याः चत्वार उपाया राजनीतिशास्त्रे कथिताः। तन्मध्ये सत्कारार्हेषु मानवतीं युक्तिः अर्थात् मानः सत्कारः, स च सामपदवाच्यः, तद्वतीं युक्तिं सन्धिं समाचरन् मित्रराज्येभ्यस्तथैव सत्कारवाणिज्य-व्यवहारादिलाभेन विशेषार्थभाग् अधिकधनलाभवानयं भूपतिः विराजते। न केवलं सत्कारार्हेषु सत्काररूपसामोपायेन राज्यं निराबाधं चलति अपि तु शत्रूणामेकतापि राज्यस्योपद्रवं कुर्यादिति शत्रूणामेकताया भेदने स्थिरधृतिरयं राजा, अतः शत्रुबाधारहित अनेन युक्तिं मानवतीं विदन् स्थिरधृतिर्भेदे विशेषार्थभागिति श्लोकभागो व्याख्यातः। "आप्तोहः क्रमकृत्प्रयुक्तिनिपुणः" इत्यनेन महाराजस्य राज्यपालनप्रकारः कीर्त्यते। आप्तोहः आप्तेषु ऊहापोहकुशलः कस्मिन्नधिकारेऽयमधिकारी इति सर्वेषां कृते तत्तत्-सामर्थ्यानुसारेण तत्तत्कार्येषु नियोजने कुशलः। अनेनास्य महाराजस्याधिपत्ये पदाधिकारिणाममात्यादीनाञ्चान्तःकलहोऽपि नास्तीति सूचितम्।

अस्य महाराजस्योन्नतिः समस्तभोग्यवस्तुसम्पत्तिः न केवलं स्वदेशवासिभिः कीर्त्यत अपि तु वैदेशिकैरपि कीर्त्यत इत्याह-श्लाघ्यातिदेशोन्नत्तिः। एतादृशवैभववत्त्वे महाराजस्याभिमानेनन कदाचित् स्वकर्तव्याच्चयुतिरपि स्यात्तेन च राष्ट्रस्य बाधोऽपि स्यादित्याशङ्कायामाह-नित्यस्फूर्त्त्यधिकारवान् गतसदाबाध इति। राज्ञः स्वाधिकारविषये स्वकर्तव्यविषये च सदा ज्ञानं जागर्ति, अतः स्वकर्तव्यच्युतिप्रयुक्तबाधाभाववानित्यर्थः। सामान्यमण्डलेश्वरादिवद् राज्ञः पराधीनत्वे सर्वमुक्त वैभवं पराधीनतादुःख-ग्रस्तत्वात् स्वप्नतुल्यमेव स्यादित्याशङ्कायामाह-स्वतन्त्रेश्वरः इति। अयं महाराजः सम्राट् स्वतन्त्र अतः पराधीनतादुःखगन्धस्यापि स्पर्शाभाववानित्यर्थः। किञ्च यस्य महाराजस्य गोष्ठीरूपः प्रसङ्गः श्रुतिमान्, आचारः श्रुतिमानेव भवति तर्हि तस्य महाराजस्य राज्ये कदापि कीदृशस्यापि असामञ्जस्यस्य शङ्कैव नोदेतीत्याहजागर्ति श्रुतिमत्प्रसङ्गचरितः श्रीबुक्कणक्ष्मापतिरिति। "सर्वं वेदात् प्रसिद्ध्यति" "वेदोऽखिलो धर्ममूलम्" इति वेदस्य निखिलविद्योप-बृंहितत्वस्य स्मरणात् तादृशवेदविद्भिः सहैव यस्य महाराजस्य मेलनं विषयचिन्तनं च भवेताम्, महाराजस्य चरितमाचरणमपि वेदानुसारि चेत् तदा राज्यं सर्वविधविकाससम्पन्नं भवतीति भावः। श्रीबुक्कणक्ष्मापतिः क्ष्मा नाम भूः श्रीबुक्कणभूपतिरित्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

यद् ब्रह्म प्रतिपाद्यते प्रगुणयत् तत्पञ्चमूर्तिप्रथां
तत्रायं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः।
विद्यतीर्थमुनिस्तदात्मनिलसन्मूर्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैराण्डितपदं सार्वज्ञमुद्योतते।।3।।

## प्रकाशिका

सम्प्रति ब्रह्ममीमांसायां यथा "जन्माद्यस्य यतः" इति सूत्रेण निखिलजगज्जन्मादिकारणत्वेनेश्वरस्य सामान्यतः सर्वज्ञत्वे सिद्धेऽपि विशेषतो दाढर्यार्थं पुनः शास्त्रयोनित्वादितिसूत्रेणापि सर्वज्ञत्वं प्रतिपाद्यते तथैवात्र "श्रुतिमत्प्रसङ्गचरितः इत्यनेन पूर्वश्लोकेनैव राज्ञः सर्वज्ञत्वे प्रतिपादितेऽपि पुनस्तदेव सार्वज्ञ्यं विशेषतः सहेतुकमुपपाद्यते–"यद् ब्रह्म प्रतिपाद्यत" इत्यादिना। एक एव परमेश्वरः जन्मस्थितिसंहारनिरोधानुग्रहकर्तृत्वभेदेन ईशानतत्पुरुषाघोरवामदेवसद्योजातलक्षणमूर्तिभेदेन प्रथत इति शैवागमसिद्धान्तं मनसि निधाय तादृशपञ्चमूर्तिषु प्रजास्थितेः नियमको राजा स्थितिकर्तृत्वेन तत्पुरुषपदवाच्यस्य परमेश्वरस्यैव साक्षात् स्वरूपभूतः इत्यर्थः। न केवलं राजा परमेश्वरस्य स्थितिमूर्तिस्वरूपः अपि तु तस्य हृदये सर्वदा प्राणीनामनुग्राहिका मूर्त्तिः विद्यातीर्थरूपेण विराजते, अतः राजा गुणतोऽपि पूर्णतः सर्वज्ञः सन् प्रकाशते इत्याहविद्यातीर्थमुनिस्तदात्मनि इत्यादिना।

## जैमिनीयन्यायमाला

इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिधिः
धौम्यो धर्मसुतस्य वैण्यनृपते स्वौजा निमेर्गौतभिः।
प्रत्यगदृष्टिररुन्धतीसहवरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः।।4।।

स खलु प्राज्ञीवातुः सर्वशास्त्रविशारदः।
अकरोत् जैमिननिनये न्यायमालां गरीयसीम्।।5।।

तां प्रशस्य सभामध्ये वीरश्रीबुक्कणापतिः।
कुरुविस्तरमस्यास्त्वंमिति माधवमादिशत्।।6।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स भव्याद्भारतीतीर्थयतीन्द्रचतुराननात्।
कृपामव्याहतां लब्ध्वा परार्ध्यप्रतिमोऽभवत्।।7।।

निर्माय माधवाचार्यो विद्वदानन्ददायिनीम्।
जैमिननीयन्यायमातां व्याचष्टे बालबुद्धये।।8।।

श्रुतिस्मृतिसदाचारपालको माधवो बुधः।
स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः।।9।।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम्।
जैमिनीयन्यायमालां श्लोकैः सङ्गृह्यते स्फुटम्।।10।।

## प्रकाशिका

एवं श्लोकद्वयेन राज्ञः महिमातिशयं प्रदर्श्य तादृशमहिमातिशययुतस्य राज्ञः मन्त्री कुलगुरुश्चायं ग्रन्थकार इति स्वमहिमानमपि प्रदर्शयति चिकीर्षिते ग्रन्थे श्रोतृणां रुच्युत्पादनार्थम्–इन्द्रस्याङ्गिरस इत्यादिना। अत्र पौराणिकदृष्टान्तैः श्रीमाधवाचार्यः अस्य महाराजस्य मन्त्री गुरुश्चेति प्रतिपाद्यते। अरुन्धतीसहचरः वसिष्ठः श्रीरामस्य कुलगुरुः।

## जैमिनीयन्यायमाला

एको विषयसन्देहपूर्वपक्षावभासकः ।
श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते।।11।।

चत्वारोऽवयवा एकश्लोकेनोक्ताः क्वचित् क्वचित्।
यत्र क्वापि बहुश्लोकैरुच्यन्तेऽतो न विस्तरः।।12।।

सर्वथापि सहस्रे द्वे नातिक्रामति सङ्ग्रहः।
मीमांसासागारस्तेन क्रीडापुष्करिणी भवेत्।।13।।

शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा।
शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम्।।14।।

धर्मो द्वादशलक्षण्यामुत्पाद्यस्तत्र लक्षणैः।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ।।15।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अधिकारोऽतिदेशश्च सामान्येन विशेषतः।
ऊहो बाधश्च तन्त्रश्च प्रसङ्गश्चोदिताः क्रमात्॥16॥

विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम्।
प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्॥17॥

उपोद्घातः कर्मभेदमानं तस्याङ्गवादगीः।
प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः॥18॥

श्रुतिलिङ्गञ्च वाक्यादिविरोधप्रतिपत्तयः।
अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः॥19॥

प्रधान्यस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता।
फलः चिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः॥20॥

श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने।
श्रुत्यादिर्बलता वेति पञ्चमाध्यायपादगाः॥21॥

अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने।
दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः॥22॥

प्रत्यक्षोक्त्यतिदेशोऽस्य शेषः सामनिरूपणम्।
नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः॥23॥

स्पष्टलिङ्गादथास्पष्टात् प्रबलादपवादतः।
अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः॥24॥

ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः॥25॥

द्वारलोपोऽस्य विस्तार कार्यैकत्वं समुच्चयः।
ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः॥26॥

उपोद्घातस्तथा तन्त्रापौ तन्त्रस्य विस्तृतिः।
आवापविस्तृतिश्चैका दशमाध्यायपादगाः॥27॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने।
द्वादशाध्यायपादार्था इति पादार्थसङ्ग्रहः।।28।।

## प्रकाशिका

जैमिनीय न्ययमालाविस्तरस्य प्रणयने बीजं कथ्यते-स खलु प्राज्ञजीवातु . . . . . तां प्रशस्य समामध्ये इत्यादिना। श्लोकाश्च निगदव्याख्याताः। जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये इत्यनेन विषय अधिकारी, प्रयोजनमित्येतत्सर्वं सूचितम्। जैमिनीयप्रणीतं धर्मविचारशास्त्रम् पूजित-विचारात्मकमीमांसापरपर्यायं ग्रन्थस्यास्यविषयः। बालबुद्धय इत्यनेनात्र बाला अनधीतमीमांसाशास्त्रा अधीतव्याकरणादिग्रन्था एव अधिकारिण न तु प्रौढा इति सूचितम्। प्रयोजनञ्च धर्मज्ञानमिति विषयप्रतिपादनेनैव प्रतिपादितं जातम्।

## जैमिनीयन्यायमाला

उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः।
तत्तत्पादगततेनविचारान्तरमुन्नयेत् ।।29।।

शास्त्रे पूवोत्तरीभावोऽध्यायानामभिधास्यते।
पाद्यानान्तु तमत्रैव लेशाद्व्युत्पादयामहे।।30।।

विधिः साक्षन्मितिर्धर्ये तस्य शेषोऽर्थवादगीः।
वेदमूला स्मृतिर्नाम वाक्यांशोऽमीष्वतः क्रमः।।31।।

उहित्वा सङ्गतिस्तिस्त्रस्तथा चान्तरसङ्गतिम्।
ऊहेदाक्षेपदृष्टान्तप्रत्युदाहरणादिकम् ।।32।।

पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्यपरे नये।
पूर्वपक्षोक्तयुक्तिं चं तत्राक्षेपादि योजयेत्।।33।।

स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः।
विचारशास्त्रं नारभ्यमारभ्यं वेति संशयः।।1।।

---

1. वाल्मीकी रामायणे 1.1.

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

एको विषयसन्देहपूर्वपक्षावभासक इत्यादिश्लोकैः ग्रन्थस्य करिष्यमाणस्य स्वरूपं वर्ण्यते।

"इष्टं हि विदुषां लोके समासव्यासधारणम्"[1] इति न्यायेन आदौ द्वादशाध्यायानां विषयाः सङ्क्षेपेण "धर्मौद्वादशलक्षण्या" मित्यादिश्लोकैः कथ्यन्ते। स्पष्टार्थाः श्लोकाः। "स्वाध्यायोऽध्येयः "इत्यारभ्य" दर्शापूर्ववदस्त्यत्र . . . इत्येवमन्तं त्रिभिः श्लोकैः शास्त्रारम्भप्रतिपादकमादिमं जिज्ञासाधिकरणं विविच्यते-विचारशास्त्रं पूजितविचारवचनात्मकं मीमांसाशास्त्रं, स्वाध्यायोऽध्येय= "स्वाध्यायोऽध्येतव्यः" इति विधानस्य=विधेः प्रयुक्तित आरभ्यं नारभ्यं वेति संशयः। मीमांसाशास्त्रं "स्वाध्यायोऽध्येतव्य इति अध्ययनविधिरध्येय्यत्वेन बोधयति न वेति संशयस्याशयः, यतः अध्ययनस्य काम्यत्वेऽर्थावबोधे सति कामना, कामनायां सत्यां षडङ्गोपेतवेदाध्ययनप्रवृत्तस्यार्थावबोधं इति परस्पराश्रयतापत्तेः, नित्यविधिबलादेव शास्त्राध्ययने नियतप्रवृत्तिः वक्तव्या, परन्तु साक्षाद् वाक्यं मीमांसाशास्त्रमध्येय्यमित्याकारकं न श्रूयते। अतः अध्ययनविधिरेव मीमांसाशास्त्राध्ययनं बोधयतीति स्वीकार्यम् अध्ययनविधिश्च "स्वाध्यायोऽध्येतव्य" इति। अत्र च स्वाध्यायशब्दो वेदवाचकः। आम्नायत अभ्यस्यत इत्याम्नायः इतिवद् अधीयत इत्यध्यायो वेदः, स्वशब्दबलात् स्वशाखा गृह्यते। अतः साक्षाद् वाक्येनानेन वेदाध्ययनमेव कार्यत्वेन बोध्यते। अतः अनेन वाक्येन वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनात्मक-मीमांसाशास्त्राध्ययनं कार्यमिति कथं सिद्ध्यतीति निरूपणार्थं "स्वाध्यायोऽ-ध्येतव्य" इत्यत्राध्ययनमर्थज्ञानार्थं विधीयत इति वक्तव्यम्, तत्र कथं सङ्गच्छते? स्वर्गाद्यपूर्वार्थमध्ययनं विधीयत उतार्थज्ञानार्थमिति संशयः। एवं संशये पूर्वपक्षं दर्शयति–

## जैमिनीयन्यायमाला

**अर्थधीहेतुताधीतेर्लोकसिद्धावघातवत् ।**
**नियामकं च चैवातो वैधारम्भो न सम्भवी॥2॥**

## प्रकाशिका

अधीतेः=अध्ययनस्य अर्थधीहेतुता=अर्थज्ञानकारणता लोकसिद्धा=विनैव

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधिना अन्वयव्यतिरेकाभ्याम् अध्ययनसत्वेऽर्थज्ञानसत्वम्, अध्ययनाभावेऽर्थ-ज्ञानाभाव इति तर्केणैव ज्ञायते। अवघातवन् नियामकं न चैव=व्रीहीनव हन्ति" इत्यत्र लोकसिद्धोऽप्यवघातः तण्डुलनिष्पादनहेतुतुषविमोकसाधनात्मको व्यापारो विधिना नियमार्थं विधीयत इति नियमाकं दर्शपूर्णमासीयापूर्वमाश्रित्य स्वीकृतं यथा तथार्थज्ञानहेतुत्वेनाध्ययनस्य नियमे नियामकं नास्तीत्यर्थः। अतो वैधारम्भो न सम्भवी इति अध्ययनविधिबलान् मीमांसाशास्त्रारम्भो, मीमांसाशास्त्रमध्येय्यमिति न सिद्ध्यतीति भावः। शङ्काकर्तुरयमाशयः फलतो विधेर्भेदास्त्रय एव अत्यन्ताप्राप्तार्थबोधकः अपूर्वविधिः, पक्षेऽप्राप्तस्य प्रापकः नियमविधिः उभयप्राप्तौ अन्यतरस्य निवृत्तिबोधकः परिसङ्ख्याविधिश्चेति।" स्वाध्यायोऽध्येतव्य" इत्यत्रापि श्रुतो विधिः एतेषां विधीनां मध्ये एकः स्यात्। अध्ययनस्यार्थज्ञानार्थत्वाङ्गीकारे अस्य विधेः फलमत्यन्ताप्राप्तार्थबोध इति वक्तुं न शक्यते तथा वक्तव्यञ्चेद्वेदाध्ययनं कारणं तदर्थज्ञानं कार्यमिति कार्यकारणभावबोधनं कार्यकारणभावबोधनेन प्रवर्तनं वा विधेः फलमिति वक्तव्यम्, यथा "व्रीहीन् प्रोक्षति" इत्यत्र व्रीहीणां प्रोक्षणं कारणं ब्रीहीणां संस्कारः अवान्तरापूर्वजनकः कार्यमिति। तथा सति दृष्टान्ते यथात्यन्ता-प्राप्तार्थबोधकत्वेन विधित्वं तथा अध्ययनार्थज्ञानयोः कार्यकारणभावस्य लोकसिद्धत्वाद् अत्यन्ताप्राप्तार्थबोधकत्वाभावात् तत्त्वेन विधित्वं न सिद्ध्यति। पक्षेऽप्राप्तस्य प्रापकः नियमविधिः व्रीहीनवहन्ति इत्यत्र यथा दर्शपूर्णमा-सीयद्रव्यस्यपुरोडाशस्य सम्पादनार्थमपेक्षितानां तण्डुलानां प्राप्तिः व्रीहीणा-मवघातेन सिद्ध्यतीति लोकतः ज्ञाते सत्यपि अवघातेनैव तण्डुलानां प्राप्तिर्यागेऽपेक्षितेति नियमार्थं विधिः स्वीकृतः तथाध्ययनस्यार्थज्ञानार्थत्वे "स्वाध्यायोऽध्येतव्यः"[4] इत्यनेन विधिना अध्ययनेनैवार्थज्ञानं सम्पादनीयमिति नियमोऽपि वक्तुं न शक्यते, यतः सर्वत्र नियमविधिस्थले नियमविधेः नियामकं किमपि दृश्यते, यथा "व्रीहीनवहन्ति" इत्यत्र दृष्टान्ते अवघास्य नियामकं यागीयं परमापूर्वमस्ति इति प्रकरणप्रमाणेनावघातस्य यागाङ्गत्वस्य निश्चयेन ज्ञायते। प्रकृतमध्ययनविधायकं वाक्यन्तु न कस्मिँश्चिदपि प्रकरणे पठितम्, अतः अस्य यागाङ्गत्वस्यैवानिश्चयाद् यागीयापूर्वे नियामकत्वं प्रकृते न सिद्ध्यति। नियामकबलादप्राप्तस्य पक्षे प्रापकत्वमेव नियमविधेर्विधित्वम्, तच्चाध्ययनविधेरर्थज्ञानार्थत्वे न सङ्गच्छत इति तत्त्वेनापि

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधित्वमध्ययनविधेर्न सिद्धयति। उभयप्राप्तावन्यतरनिवृत्तिफलको विधिः परिसङ्ख्याविधिः, यथा पञ्च पञ्च नखा भक्ष्या "इति विधिः रागतः निर्दिष्टपञ्चनखानामनिर्दिष्टपञ्चनखानाञ्च भक्षणे प्राप्ते निर्दिष्टपञ्चातिरिक्त-पञ्चनखभक्षणनिवर्तनेन विधित्वं भजते, प्रकृते अध्ययनविधेरर्थज्ञानार्थत्वे अर्थज्ञानार्थमध्ययनस्य लिखितपुस्तकपठनादीनाञ्च समुच्चित्य प्राप्त्यभावाद् अन्यतरनिवर्तकत्वस्याप्रसक्त्या तत्त्वेनापि विधित्वं न सिद्धयति। एवञ्चाध्ययनस्यार्थज्ञानार्थत्वे विधित्वप्रापकरूपाभावात् श्रुतो विधिर्न सङ्गच्छेत। अतः "स्वाध्यायोऽध्येतव्यः" इति विधेर्बलाद् अध्ययनस्यापूर्वार्थत्वमवश्यं वक्तव्यम् तथाच अध्ययनस्यार्थज्ञानार्थत्वे प्रमाणाभावात् प्रकृतं वेदार्थनिर्णयहेतुभूतं मीमांसाशास्त्रं "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिबलादारम्भणीयमिति न सिद्धयतीति पूर्वपक्षस्याशयः। एवं पूर्वपक्षे प्राप्ते मीमांसाशास्त्रमेतद्विधि-बलादेवारम्भणीयमिति सिद्धान्तं दर्शयति ग्रन्थकारः–

## जैमिनीयन्यायमाला

**दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम्।**
**अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधेः॥3॥**

## प्रकाशिका

अत्र="स्वाध्यायोऽध्येतव्य" इति विधेः नियामकं क्रत्वपूर्वम् "व्रीहीनवहन्ति' इत्यत्र दर्शापूर्ववद्=दर्शपूर्णमासीयापूर्ववदस्ति, अतः अर्थनिर्णायकं शास्त्रं=मीमांसाशास्त्रम् आरभ्यताम्=अरम्भणीयमित्यर्थः।

अयंभावः–"स्वाध्यायोऽध्येतव्य" इत्यनेन विधिना अर्थज्ञानार्थमेव वेदाध्ययनं विधीयते, दृष्टे फले वाक्यार्थज्ञानरूपे लभ्यमाने सम्भवति सति अदृष्टस्य स्वर्गादेः परिकल्पना न युक्तेति। अत्र विधित्वप्रापकरूपं पक्षेऽप्राप्ताशपूरकत्वम्, "नियमः पाक्षिके सति" इत्युक्तेः। अतोऽयं नियमविधिरिति स्वीक्रियते। अत्र नियमविधिस्वीकारे नियामकं सकलक्रतुजन्यमपूर्वम् यथा "व्रीहीनवहन्ती"-त्यत्र दर्शपूर्णमासीयापूर्वोत्पत्त्यै व्रीहीणामवघातस्य नियमः स्वीकृतः व्रीहीणामवघातेन सम्पादितैः तण्डुलैः निर्मितैः पुरोडाषैः कृतो यागोऽपूर्वजनक न तु प्रकारान्तरेणेति प्रकरणप्रमाणादुच्यते तथाऽत्र अध्ययनं = गुरुमुखोच्चारणानूच्चारणम्, अनेन विधिना

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गृहीतवेदैःसमधिगतो वेदार्थः, अनुष्ठितञ्च कर्म फलं यागजन्यमपूर्वं जनयतीति नियमः सिद्ध्यतीतिं स्वीक्रियते। यदुक्तमध्ययनविधायकं वाक्यं कस्मिँश्चिदपि प्रकरणे नाम्नातम् अतः अस्य यागाङ्गत्वस्यैव अनिश्चयाद् यागीयापूर्वे नियामकत्वं न सिद्ध्यतीति तत्रोच्यते-"स्वाध्यायोऽध्येतव्य" इदमनारभ्याधीतं वाक्यमिति तु सत्यम्, परन्तु अनारभ्याधीतत्वमात्रेण केनापि यागेन न सम्बध्यत इति वक्तु न शक्यते, यतः" यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं श्रृणेति इत्यत्र अनारभ्याधीतवाक्यादपि पर्णमय्याः क्रत्वर्थत्वमेव युक्तमिति चतुर्थतृतीये प्रथमाधिकरणे निर्णीतम्। अतः अत्रापि अनारभ्याधीत्वमात्रेण यागेन सम्बद्धमध्ययन नास्तीति वक्तुं न शक्यते किन्तु वेदाध्ययनामन्तरा यागानुष्ठानासम्भवादध्ययनं यागाङ्गभूतमिति लिङ्गादेव विनिश्चिते "सम्भवति दृष्टे फलेऽदृष्टकल्पना नोचिता" इति न्यायेन अर्थज्ञानद्वारैवाध्ययनं यागस्योपकरोतीति सिद्धे यागीयापूर्वस्यैव गुरुमुखोच्चाणारनूच्चारणात्मकाध्ययननियमे नियामकत्वमिति न दोषः। एवञ्च "स्वाध्यायोऽध्येतव्य" इत्यत्र नियमविधिः, अध्ययनञ्चार्थज्ञानार्थम्, तदर्थज्ञानं व्याकरणनिरुक्ताद्यध्ययनेन न सिद्ध्यतीति वेदवाक्यार्थनिर्णयोपायभूतन्याय-निबन्धात्मकमीमांसाशास्त्रमारम्भणीयमिति सिद्धम्।

## जैमिनीयन्यायमाला

**अथवाध्यापनात् सिद्धे नैवास्त्यध्ययने विधिः।**
**तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः॥ 4॥**

## प्रकाशिका

अथवेति पक्षान्तरमुच्यते। इदञ्च गुरुमतम्। अध्ययने अध्यापनाद्= अध्यापनविधिना सिद्धे अध्ययने स्वाध्यायोऽध्येतव्यः इति विधिर्नास्ति। "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिः अध्ययनविधायको नास्तीत्यर्थः। तेन पूर्वोत्तरौ पक्षौ अन्यहेतुभिः प्रकारान्तरेण साध्यौ साधनीयौ।

अयं भावः-"अष्टवर्षं ब्राह्मणमुपनयीत" तमध्यापयीत इत्यध्यापनं श्रुत्या विधीयते। अध्यापनविधेः नियोज्यः आचार्यत्वकामी इति स्पष्टमेव, अध्यापनेनाचार्यकं भावयेदिति विधेः अर्थो ज्ञायते। अध्यापनञ्च छात्राणा-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मध्ययनमन्तरानुपपन्नं सदध्ययनं माणवकेन कार्यमिति अध्यापनविधिरेव बोधयति। स्वाध्ययोऽध्येतव्य" इत्यत्र वाक्येन स्वाध्याये स्वशाखाया-मध्ययनविषयत्वमस्तीति गम्यते, किन्तु, केन तत्कार्यमिति श्रुत्या न बोध्यते इति नियोज्यस्य अश्रवणादयं विधिरध्ययनविधाने न क्षमः। अध्यापनविधिनै-वाध्ययने सिद्धे अध्ययनविधौ नियोज्यकल्पना न युक्ता। एवञ्चाध्ययनम-ध्यापनविधिना सिद्ध्यति अतः अध्ययनविधिः अध्ययनविधायकः इति मतमाश्रित्य पूर्वोत्तरपक्षौ यौ प्रदर्शितौ तौ न समीचीनौ। अतः मीमांसाशास्त्रमारम्भणीयं न वेत्यत्र पूर्वोत्तरपक्षयोः प्रतिपादनं कथं कार्य मिति उच्यते—

## जैमिनीयन्यायमाला

**विधेयाध्यापनं सिद्ध्येद् बालस्यार्थधियं विना।**
**तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम्॥ 5॥**

## प्रकाशिका

बालस्य अर्थधियं विना बालस्य उपनीतस्य वेदस्य अर्थबोधनं विनैव, विधेयाध्यपनं सिद्ध्यति, तेन=अध्यापनविधिना अर्थज्ञानोत्पत्तिं यावदध्यापनं कार्यमिति न विधीयत अपि तु नियतानुपूर्वीक्रमवद्वेद-ग्रहणपर्यन्तमेवाध्यापनं कार्यमिति विधीयते तेनार्थज्ञानेऽध्यापनप्रयुक्त्यभावात् निर्विषयं शास्त्रं वेदार्थनिर्णयानुकूलन्यायनिबन्धात्मकमीमांसाशास्त्रं निर्विषयम्, अत एव निष्फलम् निष्प्रयोजनञ्चेति उपेक्ष्यताम् नारम्भणीयमित्यर्थः। अयं भावः—अध्यापनविधिः माणवकं वेदमध्यापयेदिति बोधयति, वेदाध्यापनं नाम माणवके येन व्यापारेण वेदाख्यवर्णराशेः ग्रहणं भवति तादृशव्यापारविशेषः। अर्थज्ञानं माणवके यथा भवति तथा व्यापारः अध्यापनविधेविर्धेय इत्यत्र प्रमाणाभावात् अध्यापनविधिः माणवकेऽर्थबोधजननं विनैव वेदमात्रस्य बोधनेन चरितार्थो भवति इति वेदार्थनिर्णयानुकूलन्यायनिबन्धात्मकमीमांसाशास्त्रस्य अध्ययनविषयताध्यापनविधिना न सिद्ध्यति अतः मीमांसाशास्त्रं निर्विषयम्, मीमांसाशास्त्रस्याध्ययनविषयतायामेव प्रमाणाभावाद् शास्त्रस्य प्रयोजनमपि नास्तीति तेनैव सिद्धे मीमांसाशास्त्रं नारम्भणीयमिति पूर्वपक्षे समाधिरभिधीयते—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

स्वतः प्राप्तार्थबोधस्य विवक्षानपनोदनात्।
विषयादिसमुत्पादं शास्त्रमारभ्यतां ततः॥ 6॥

## प्रकाशिका

स्वतः प्राप्तार्थबोधस्य = वर्णात्मकस्य वेदस्य अर्थज्ञानार्थमेव बोधनं स्वतः प्राप्तम्, शब्दस्वभावादेव प्राप्तस्य अर्थज्ञानफलकस्य वेदाध्यापनस्य केवलवर्णमात्रग्रहणार्थत्वकल्पनस्यायुक्तत्वादर्थबोधनार्थमेव वेदाध्यायनमिति अध्यापनविधेर्व्यापारः स्वीकार्यः। विवक्षानपनोदनात्= वेदवाक्यानां विवक्षिता अर्था न सन्ति, यथा लोके "विषं भुङ्क्ष्व" इत्यादौ प्रतीयमानोऽपि अर्थः न विवक्षितस्तथेति वक्तुं न शक्यते, यतः नियतानुपूर्वीघटितवर्णात्मकवेदराशेः अर्था एव विवक्षिता न सन्ति इति स्वीकारे कारणाभावादित्यर्थः। लोके च विषं भुङ्क्ष्व इत्यादिस्थले आप्तोक्तत्वस्य विषभोजनकार्ये बाधात् प्रतीयमानादर्थादन्योऽर्थः विवक्षित इति स्वीक्रियते शब्दस्वभावात् तद्वाक्यस्यापि विवक्षितार्थः अस्त्येव तद्वद्वेदेऽपि शब्दस्वभावादेव विवक्षिता अर्थाः सन्तीत्येव वक्तव्यमित्यर्थः। अतः विषयादिसमुत्पादं शास्त्रमारभ्यताम् शास्त्रमारम्भणीय-मित्यर्थः। अत्र अध्यापनविधिः साक्षादध्ययनमेव माणवकस्य कार्यमिति बोधयति, अध्ययनस्यान्तरङ्गमर्थज्ञानम् न तु आचार्यत्वप्राप्तिरिति शब्दप्रमाण-स्वभावादेवावगम्यते। वेदो नियतानुपूर्वीक्रमवद्वर्णराशिः लोके वर्णराशीनां पदादीनां प्रयोगं अर्थावबोधनायैव क्रियते इति दर्शनात् समानन्यायेन वेदाध्यापनमपि माणवके तदर्थबोधजननायैवेति स्वीकार्यम्। प्रतीयमानोऽर्थः वेदस्य विवक्षितो न वेति तु विचारेणैव निर्णेयम्। अतः अध्यापनविधिरेव विचारशास्त्रमारम्भणीयमिति बोधयति इति प्राभाकराणामाशयः। विचारशास्त्रं वैधमित्यत्र प्रस्थानयोः न कापि विमतिः। विचारशास्त्रस्य प्रयोजको विधिः 'स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिरिति भाट्टाः। "अष्टवर्षं ब्राह्मण-मुपनयीत, तमध्यापयीत" इत्यध्यापनविधिरिति प्राभाकराः। विचारशास्त्रस्य वैधत्वे प्रयोजनमकरणे प्रत्यवायापत्त्या विचारशास्त्राध्ययनस्यापि वेदाध्ययनवन् नित्यत्वसिद्धिः। एवं विधिप्रयुक्त्या विचारशास्त्रास्य आरम्भः कार्य इति सिद्धे विचारशास्त्रस्य विषयभूतो धर्मः क इति अर्थात् किं तस्य लक्षणम्? किं प्रमाणमिति द्वितीयेऽधिकरणे भाट्टमतानुसरेण विचार्यते

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

**विचारविषयो धर्मो लक्षणेन विवर्जितः।**
**मानेन वाथवोपेतस्ताभ्यामिति विचिन्त्यते॥7॥**

## प्रकाशिका

विचार्यस्य धर्मस्य निर्दुष्टं किमपि लक्षणमस्ति न वा प्रमाणं किमपि अस्ति न वेति विचार्यत इत्यर्थः॥ 7॥

अत्र पूर्वपक्षः उपस्थाप्यते–

## जैमिनीयन्यायमाला

**लौकिकाकारहीनस्य तस्य किं नाम लक्षणम्।**
**मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात्॥8॥**

## प्रकाशिका

तस्य धर्मस्य लौकिकाकारहीनस्य घटपटादिवल्लौकिकाकाररहितस्य किं लक्षणं = लक्षणं= चिह्नं किमपि भवितुं नार्हति। मानशङ्का तु दूरेऽत्र =लक्षणमेव नास्ति चेत् सुतरां प्रमाणं नास्ति, प्रत्यक्षाद्यप्रवर्तनात् = प्रत्यक्षादिप्रमाणानामप्रवृत्तेः इत्यर्थः। अयं भावः धर्मस्य लक्षणप्रमाणे स्तो न वेति संशये पूर्वं किं नाम लक्षणम्, प्रमाणञ्च किं नाम इति विवेचनीयम्। तत्र "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्युक्त्या लक्ष्यस्य तदितर भेदकः धर्मः, तत्त्वेन व्यवहारस्य हेतुभूतो वा धर्मः लक्षणमित्युच्यते। तदेवोक्तम् "असाधारणधर्मो लक्षणम्" इति। यथा सास्नादिमत्वधर्म गोनिष्ठः तदितरभेदकः गोर्लक्षणमिति स्वीक्रियते। प्रमाणञ्च प्रमाकरणम् वस्तुप्रकाशकम्। लक्षणेन लक्ष्यस्वरूपे निश्चिते एव प्रमाणेन तस्य लक्ष्यस्य वस्तुनः अवगमो भवति। यद्यपि प्रमाणं वस्तुप्रकाशकमिति लक्षणज्ञानाभावेऽपि प्रमाणेन विषयप्रकाशः भवत्येव यथा कश्चन्द्र इति चन्द्रलक्षणज्ञानाभावेऽपि चन्द्रचक्षुषोः संयोगे सति चन्द्रस्य प्रमा भवत्येव तथापि चन्द्रलक्षणज्ञानाभावे चन्द्रत्वेन प्रकाशो न भवति अपि तु यत्किञ्चित्पदार्थत्वेनैव बोधो भवति। "प्रकष्टः प्रकाशः चन्द्र" इति लक्षणबोधानन्तरमेव चन्द्रस्य चन्द्रत्वेनावगमो भवत्यतः लक्षणप्रमाणाभ्यां वस्तुसिद्धिरित्युच्यते। धर्मस्य च लौकिकाकाराभावाद् लक्षणं निर्देष्टुं भवितुं नार्हति, लक्षणाभावादेव प्रमाणानामपि तत्र प्रवृत्तिर्न

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवतीति भावः।

एवञ्च लक्षणप्रमाणयोरभावाद् धर्मस्य सिद्धिरेव न भवति इति पूर्वपक्षे प्राप्ते समाधिरभिधीयते–

**जैमिनीयन्यायमाला**

**चोदनागम्य आकारो ह्यर्थत्वे सति लक्षणम्।**
**अत एव प्रमाणं च चोदनैवात्र नो कुतः।। १।।**

**प्रकाशिका**

अर्थत्वे सति चोदनागम्य आकारः धर्मस्य लक्षणम्। धर्मस्य लक्षणसद्भावादेव प्रमाणमपि चोदना विधायकं वाक्यमस्ति, अतः धर्मे लक्षणप्रमाणे न स्तः इति वक्तुं न शक्यत इत्यर्थः। अयं भावः–चोदनागम्यत्वे सत्यर्थत्वं धर्मस्य लक्षणं फलितम्। चोदना नाम विधिवाक्यम्। बलवदनिष्टाननुबन्धीष्टसाधनत्वमर्थत्वम्। अत्र इष्टसाधनत्वमर्थत्वमित्युक्तौ यथा यागादिषु इष्टसाधनत्वमस्ति तथा श्येनेनाभिचरन् यजेत इति विहिते श्येनयागेऽपि इष्टसाधनत्वस्य विद्यमानत्वात् श्येनयागस्यापि धर्मत्वं स्यात्, अतः अनिष्टाननुबन्धीष्टसाधनत्वमित्युक्तम्, एवं सति इष्टसाधनेषु यागेष्वपि यागीयद्रव्यादिसम्पादनायासजनितानिष्टानुबन्धित्वाद् धर्मत्वं न स्यात्। यतः लोके इष्टं सुखम् अनिष्टं दुःखमिति प्रसिद्धम्। यागापेक्षितसामग्र्यादीनां सम्पादने दुःखसम्भवादनिष्टदुःखानुबन्धित्वस्यावश्यम्भावित्वाद् भोजनादिष्वपि भोजनसामग्रीनिर्माणजन्यदुःखस्यावश्यम्भावित्वाद् अनिष्टाननुबन्धित्वस्य सर्वत्रासम्भवत्वात् कुत्रापि धर्मत्वं न स्यादतः बलवदनिष्टानुन्बन्धीष्ट-साधनमित्युक्तम्। यागमध्ये भोजनादिषु च सामग्रीसम्पादनादिजन्यं यदनिष्टं तत् यागादिफलजन्यसुखापेक्षया न्यूनमेवेति यागादिषु धर्मत्वं सिद्ध्यति। श्येनयागे तु श्येनयागस्य फलं शत्रुमरणम्, स्वाभीष्टशत्रुहत्याजन्यसुखापेक्षया भूतहत्याजन्यनरकात्मकदुःखं बलवदिति बलवदनिष्टानुबन्धित्वात् बलवद-निष्टाननुबन्धीष्टसाधनत्वाभावाद् धर्मत्वं न सिद्ध्यति। एवञ्च विधिगम्यं बलवदनिष्टाननुबन्धीष्टसाधनं धर्मः इति लक्षणं सिद्धम्। बलवद-निष्टाननुबन्धीष्टसाधनं धर्मः इत्युक्तौ चैत्यवन्दनादौ बौद्धवाक्यादुक्तेष्ट-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साधनत्वस्य प्रतीतेस्तत्रातिव्याप्तिः स्यात्। एवञ्च वेदविहितोऽर्थो धर्म इति धर्मलक्षणं निर्दुष्टम्। धर्मस्य वेदविहितार्थत्वे सिद्धे वेद एव तत्र प्रमाणमिति प्रमाणमपि ज्ञातं भवति। अतः लक्षणप्रमाणयोः सद्भावाद् धर्मः विचार्य इति फलितम्।

भाट्टमतमेवं निरूप्य गुरुमतेनेदमधिकरणं निरूप्यते

## जैमिनीयन्यायमाला

**यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः।**
**सिद्धार्थोऽप्यथ विध्येकगम्यः कार्यार्थ एव वा॥10॥**

## प्रकाशिका

जिज्ञास्यः वेदार्थः = विचार्यत्वेन प्रतिज्ञातो वेदार्थः किं मन्त्राद्यवबोधितः = देवतादिप्रतिपादनरूपः, अथ = अथवा विध्येकगम्यः विधायकवाक्यैर्ज्ञातः कार्यार्थः = यागादिकार्यरूप एव। अयं भावः-"अजातो धर्मजिज्ञासा" इति जिज्ञासाधिकरणे अथशब्दस्य कृत्स्नवेदाध्ययनानन्तर्यत्वोक्तेः धर्मशब्दो वेदार्थवाचकः अतः शब्दः हेत्वर्थः अध्ययनस्यार्थज्ञानार्थत्वाद् वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्य इति सूत्रार्थः सम्पद्यते। द्वितीयेऽधिकरणे चोद्नालक्षणोऽर्थो धर्मः इत्यनेन स च वेदार्थः विधिलक्षण एवेति निर्धार्यते। अतः मन्त्रब्राह्मणात्मकवेदराशेः तात्पर्यं मन्त्रवर्णेभ्यः अवगते सिद्धार्थे "वज्रहस्तः पुरन्दरः इत्यादिमन्त्रेभ्यो ज्ञाते देवतादावुत ब्राह्मणवाक्यैः ज्ञाते यागादिविधाविति संशयः। अत्र पूर्वपक्षः–

## जैमिनीयन्यायमाला

**सिद्धे पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः।**
**मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेपि का क्षतिः॥11॥**

## प्रकाशिका

पुत्रजन्मादौ सिद्धे पुत्रस्ते जात इत्यादिवाक्येभ्यः पुत्रादिसिद्धपदार्थे, व्युत्पत्तेः =शक्तिग्रहस्य उपपत्तितः = उपपत्तेः सम्भवात्, मन्त्रादिगम्यसिद्धस्य = मन्त्रवर्णेभ्योऽवगतस्य देवतादेः, वेदार्थत्वेऽपि= वेदप्रतिपाद्यत्वेन स्वीकारेऽपि का क्षतिः = शब्दात्मकवेदप्रामाण्यस्य हानिर्नास्तीत्यर्थः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयं भावः नियतक्रमवन्तो वर्णा एव वेदपदवाच्याः इति वेदो नाम शब्दप्रमाणम्। शब्दश्च सिद्धार्थबोधकः "घटोऽस्ति" इत्यादिः प्रत्यक्षादि प्रमाणान्तरावगतार्थबोधक एव भवतीति अनधिगतार्थबोधकत्वाभावात् प्रामाण्यं न भजते। प्रमाणानां प्रामाण्यमनधिगताबाधितार्थबोधकत्वमेवेति पञ्चमाधिकरणे प्रतिपादयिष्यते। अतः सिद्धार्थबोधकश्चेत् शब्दः अनुवादकत्वेनाप्रमाणमेव स्यात्। एवञ्च शब्दस्य प्रामाण्यं विधिप्रतिषेधाभ्यां कार्यार्थबोधकत्वेन वक्तव्यम्। मन्त्रवर्णैः "गणानान्त्वा गणपतिं हवामहे" इत्यादिवाक्यैः किमपि कर्तव्यतया कार्यं न विधीयते, अतः मन्त्रवर्णैरवगते सिद्धे देवतादौ वेदस्य तात्पर्यं स्वीक्रियते चेद् वेदस्य प्रामाण्यमेव कुण्ठितं स्यात् तस्मान् मन्त्रादिगम्ये सिद्धार्थे वेदार्थत्वं नास्तीति चेदत्रोच्यते। प्रमाणान्तगम्यार्थबोधकत्वमेव सिद्धार्थबोधकानां वाक्यानामिति न युक्तम् "स्वर्गेऽप्सरसः," "प्रज्ञानं ब्रह्म" इत्यादिपदार्थानां सिद्धानामपि वेदैकगम्यत्वात्। लौकेऽपि सिद्धार्थबोधकवाक्यानां श्रोतृपुरुषस्य कृते प्रमाणान्तरानधिगतार्थबोधकत्वेनैव प्रामाण्यं दृश्यते। व्युत्पत्तिश्च यथाकार्यबोधकवाक्यैः "घटमानम, घटं नय" इत्यावापोद्वापाभ्यां शब्दस्य भवति तथा "दिष्टया वर्धसे चैत्र, पुत्रस्ते जातः" इति कार्यबोधक-प्रत्ययरहितवाक्यैरपि शब्दस्य व्युत्पत्तिः दृश्यत एव। तथा च सिद्धार्थ-बोधकवाक्यैः व्युत्त्पत्तिः न सम्भवतीति वक्तुं न शक्यते। तस्मान्मन्त्रादिगम्ये सिद्धार्थेऽपि वेदस्य तात्पर्यं स्वीकार्यमिति।

एवं पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते–

### जैमिनीयन्यायमाला

**हर्षहेतुबहुत्वेन व्युत्पत्तिः पुत्रजन्मनि।**
**दुर्लभा सुलभा कार्ये वेदार्थोऽतः स एव हि॥12॥**

### प्रकाशिका

पुत्रजन्मनि = "पुत्रस्ते जात" इत्यादिवाक्यैः पुत्रोत्पत्तिबोधने पुत्रशब्दस्यार्थः, हर्षहेतुबहुत्वेन = पितुः हर्षस्य पुत्रोत्पत्त्यतिरिक्तहेत्वन्तराणां विद्यमानत्वात् पुत्रशब्दः अपत्यार्थक इति निश्चयः दुर्लभः, कार्ये = कार्यताबोधकवाक्यात् शब्दार्थनिश्चयः सुलभ इति वेदार्थः = वेदतात्पर्यं, स

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एव = विधिरेवेति स्र्वकार्यमिति शेषः।

अयं भावः–शब्दप्रमाणस्य प्रामाण्यरक्षणार्थं शब्दविशेषात्मकस्य वेदस्य तात्पर्यं विधौ यज्ञादिकार्यप्रतिपादन एव वक्तव्यम्। सिद्धार्थमात्रबोधक वाक्येभ्योऽर्थनिर्णयः क्वचिदेव सामान्यतो भवति। तत्रापीत्थमिति निर्णयः दुर्लभ एव। यथा "पुत्रस्ते जातः" इति वाक्यश्रवणसमनन्तरं पितुः विकसितमुखादिलक्षणैः प्राप्तानन्दोयमित्येव निश्चयो भवति। एतदानन्दप्राप्तौ वाक्यमिदं निमित्तमिति च निश्चयः स्यात् परन्तु हर्षहेतूनां सुखप्रसवादीनां दैवेच्छया तत्काले प्राप्तधनादीनाञ्च सम्भवाद् वाक्येनानेन सुतोत्पत्तिरेव बोध्यत इति निश्चयेन वक्तुं न शक्यते। अतः कार्यबोधकलिङादिघटितवाक्यैः शब्दानां शक्तिः "घटमानय घटं नय" इत्यादिस्थलेषु आवापोद्वापाभ्यां निश्चीयत इति कार्ये एव शब्दप्रमाणस्य प्रामाण्यं वक्तव्यम्। लोके च "रामो गच्छति" इत्यादि वाक्यानामनुमानद्वारैव प्रामाण्यमिति लोके शब्दस्य प्रामाण्यं प्राभाकरैर्न स्वीक्रियत इति सर्वत्र वेदे शब्दानां कार्ये एव तात्पर्यमिति भावः। अत एवाभियुक्तोक्तिः" वेदा हि यज्ञार्थमिह प्रवृत्ताः" इति।

भाट्टमतेन तृतीयमधिकरणं निरूप्यते–

### जैमिनीयन्यायमाला

**धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम्।**
**एतत्किं न परीक्ष्यं स्यात्किं वा सम्यक् परीक्ष्यताम्॥13॥**

### प्रकाशिका

धर्मस्य=जिज्ञास्यत्वेन प्रतिज्ञातस्य धर्मस्य, ज्ञापकं मानं= प्रमाणम्, चोदनात्मकं यदुक्तम् = विधिरूपं यदुक्तम्, तत् परीक्ष्यमुत न परीक्ष्यमिति विशयः।

### जैमिनीयन्यायमाला

**मानोपदेशान्मेयस्य सिद्धत्वात्किं परीक्षया।**
**मैवं विचारशास्त्रेस्मिन् परीक्षोपेक्ष्यते कुतः॥14॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

मानोपदेशात् = धर्मे वेदः प्रमाणमिति धर्मस्य चोदनैकवेद्यत्वकथनात् सिद्धमेवातः तत्र वेदः प्रमाणं भवति न वेति विचारः काकदन्तविचार-वत्प्रयोजनाभावादुपेक्षणीय इति पूर्वपक्षे प्राप्ते मीमांसाशास्त्रमिदं विचारशास्त्रमतः धर्मे वेदः प्रमाणमिति कथनेनैव धर्मे वेदस्य प्रामाण्यम् धर्मस्य च वेदैकप्रमाणकत्वं सिद्धं न भवति। "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः "इत्यादिस्मृतौ धर्मस्य तर्कगम्यताया अपि प्रतीतेः कीदृशः तर्कस्तत्राभिप्रेतः कीदृशो नेत्यादिनिश्चयोऽपि विचाराधीन एवेति धर्मस्य प्रमाणं किमिति परीक्षावश्यं कर्तव्येति भावः।

गुरुमतेनेदमधिकरणं विविच्यते–

## जैमिनीयन्यायमाला

**आदौ परीक्ष्यो वेदार्थश्चोदनामानताथवा।**
**वेदार्थस्य प्रधानत्वात् प्रथमं तत्परीक्षणम्।।15।।**
**चोदना मानतैवात्र प्रथमं साध्यतां गता।**
**अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम्।।16।।**[1]

## प्रकाशिका

आदौ वेदार्थः परीक्ष्यः उत चोदनाप्रमाणं परीक्षणीयमिति विशये वेदार्थस्यैव प्रधानत्वात् पूर्वं वेदार्थ एव परीक्षणीय इति पूर्वपक्षे प्राप्ते ।"चोदनालक्षणोऽर्थो धर्मः"[1] इति धर्मलक्षणे चोदनाया धर्मे अनपेक्षं प्रामाण्यमुक्तमतः अनपेक्षतया प्रधानभूतायाश्चोदनायाः परीक्षा प्रथमं कार्येति सिद्धान्तः।

अयं भावः=प्राभाकरमते "अथातो धर्मजिज्ञासा" इत्यत्र वेदार्थविचारः कर्तव्यतया प्रतिज्ञातः द्वितीयाधिकरणे च स च वेदार्थः विधिरूप एवेति निर्णीतम्। अतः विचारविषयत्वेन प्रतिज्ञातस्य वेदार्थस्य प्राधान्यात् पूर्वं वेदार्थ एव विचारणीयः इति पूर्वपक्षे "मानाधीना मेयसिद्धिः" इति मेयसिद्धेः मानाधीनत्वात् वेदार्थस्य प्रकाशक प्रधानभूतं चोदनात्कं मानमेव परीक्षणीयम्,

1. जै.द.द 1.1.2.

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यथा माने निश्चयाभावान्मेयभूतो वेदार्थोऽपि परीक्षितोऽपि सन्दिग्ध एव स्यात्। यद्यपि स्वतःप्रामाण्यवादे माननिष्ठं प्रामाण्यं स्वतः सिद्धमेव तथापि इदमेवास्य प्रमेयस्य मानं नान्यदिति निश्चयः मानपरीक्षाधीन इति चोदनाप्रमाणमेवादौ परीक्षणीयमिति समाधिः।

चतुर्थाधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**प्रत्यक्षादिभिरप्येष गम्यते विधिनैव वा।**
**अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता॥17॥**

**वर्तमानैकविषयमक्षं धर्मस्तु भाव्यसौ।**
**अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता॥18॥**

**प्रकाशिका**

एष धर्मः प्रत्यक्षादिप्रमाणैर्गम्यते = ज्ञायते उत विधिनैव चोदनाप्रमाणेनैवेति विशये अक्षादीनां = प्रत्यक्षादीनां प्रमाणत्वात् मेयभूतस्य धर्मस्यापि प्रकाशकत्वं युक्तमिति पूर्वपक्षे प्राप्ते प्रत्यक्षप्रमाणं वर्तमानैकविषयम्= विद्यमानस्यैव वस्तुनः ग्राहकम्, अनुमानादिकमपि प्रत्यक्षेण गृहीतलिङ्गमूल-कमतः क्रियात्मकस्य भव्यस्य धर्मस्य प्रकाशः प्रत्यक्षादिप्रमाणैर्न युज्यत इति श्लोकार्थः।

अयमाशयः प्रत्यक्षम्, अनुमानम्, उपमानम्, अर्थापत्तिः, अनुपलब्धिः, शब्दश्चेति षट् सन्ति प्रमाणानि प्रमेयावभासकानि इति भाट्टाः। अनुपलब्धिप्रमाणं विहाय पञ्च प्रमाणानि सन्तीति प्राभाकराः। प्रमाकरणं प्रमाणम्, प्रमा च प्रमेयावभासिका, धर्मश्च प्रमेयः सर्वैरपि वादिभिः येन केन प्रकारेण धर्मस्य स्वीकारात्। अतः प्रमेयभूतस्य धर्मस्य प्रत्यक्षादि-प्रमाणविषयत्वमपि स्वीकार्यमिति प्राप्ते उच्यते येन केनापि प्रकारेण स्वीकृता धर्मः प्रत्यक्षादिप्रमाणगम्य इति तु समीचीनम् परन्तु जिज्ञासाविषयत्वेन प्रतिज्ञातो धर्मः प्रत्यक्षादिप्रमाणस्यापि विषय इति तु न समीचीनम्, श्रेयःसाधनताकत्वेन हि यागादीनां धर्मत्वम्, श्रेयस्साधनता च इन्द्रियवेद्यो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नास्ति, प्रत्यक्षप्रमाणस्य सम्बद्धवर्तमानविषयस्यैव ग्राहकत्वात्। तदुक्तम् "सम्बद्धं वर्तमानञ्च गृह्यते चक्षारादिना" इति भाट्टवार्तिक। भाव्यश्च धर्म इति प्रत्यक्षप्रमाणं धर्मं प्रति निमित्तं न भवति। अनुमानञ्च प्रत्यक्षादि-प्रमाणाधीनमिति धर्मः तन्निमित्तकोऽपि नास्तीत्यर्थः।

प्रमाणलक्षणविषये प्रमाणसङ्ख्यायाः विषये च भाट्टप्राभाकर-प्रस्थानयोर्मतभेदे सत्यपि धर्मः प्रत्यक्षादिनिमित्तको नास्ति चोदनैकवेद्य इति विषये मतभेदो नास्तीति गुरुमतानुसारेणाधिकरणशरीरं पृथग्ग्रन्थकारैर्न निरूपितम्।

### जैमिनीयन्यायमाला

**अबोधको बोधको वा न तावद् बोधको विधिः।**
**शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यत्॥19॥**
**समभिव्याहृते धर्मे शक्तिग्रहणसम्भवात्।**
**बोधकरस्य विधेर्मात्वमनपेक्षतया स्थितम्॥20॥**

### प्रकाशिका

"यजेत स्वर्गकामः" इत्यादिरूपो विधिर्धर्मस्य बोधको भवति न वेति विशये शाब्दाबोधः शक्तिग्रहाधीनः, शक्तिग्रहश्च प्रत्यक्षादिप्रमाणाधीन इति धर्मस्य प्रत्यक्षादिप्रमाणागम्यत्वे शब्दप्रमाणेन बोधनमसंभवमिति वेद-गम्यत्वमपि धर्मे न सिद्ध्यति। एवञ्च धर्मे प्रमाणाभावाद् धर्मे नास्ति इति पूर्वपक्षे प्राप्ते उच्यते अनधिगताबाधितार्थबोधः प्रमा, बोधकं प्रमाणम् इति प्रमाणलक्षणपर्यालोचनेन ज्ञायते यद् बोधकत्वमनधिगताबाधितार्थविषयकत्वञ्च प्रामाण्यकारणकोट्यां प्रविष्टे तत्र धर्मे प्रत्यक्षादिप्रमाणानामप्रसरात् शब्दप्रमाणेन वेदेन कथं धर्मस्यालौकिकस्य बोधः सम्भवतीति पूर्वपक्षस्याशयः। तस्येदं समाधानम् लोके समभिव्याहारादप्रसिद्धपदार्थस्यागृहीतशक्तिकस्याज्ञातार्थस्यापि बोधः शब्दप्रमाणेनैव भवतीति बहुषु स्थलेषु दृश्यते, तद्यथा-"'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यत्र मधुकरशब्दार्थः अज्ञातः प्रभिन्नकमलोदरादि-प्रसिद्धार्थकपदैः सहोच्चरितत्वात् शब्देनैव ज्ञायते। एवं "यजेत स्वर्गकामः" इत्यादिवाक्यैः स्वर्गस्य यागः साधनमिति श्रवणात् श्रेयस्साधनताको यागो धर्मः इति अलौकिकस्यापि धर्मस्य शब्दप्रमाणेन ग्रहणं सुगममेव। एवञ्च धर्मः वेदैकगम्यः वेदश्च स्वतः प्रमाणमिति अस्मिन्नधिकरणे प्रतिपादितम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रैव वेदस्य स्वतःप्रामाण्यविवेचनावसरे भाष्यकारैः प्रमाणानि कति सन्ति तेषां किं लक्षणमिति विस्तरेणोपपादितम्।

एवं वेदस्य स्वतः प्रामाण्ये स्थितेऽपि शब्दस्यैवानित्यत्वात् शब्दात्मकवेदराशेः वेदस्यानित्यत्वं स्वाभाविकमतः अनित्यो वेदः धर्मे कथं प्रमाणं भवतीति शङ्कायां शब्दस्य नित्यत्वाद्वेदोऽपि नित्य इति प्रसाधनार्थं शब्दस्य नित्यत्वं षष्ठेऽधिकरणे प्रतिपाद्यते–

## जैमिनीयन्यायमाला

**विध्यादिरूपो यः शब्द सोऽनित्योऽथाविनश्वरः।**
**अनित्यो वर्णरूपत्वात् वर्णे जन्मोपलम्भनात्॥21॥**
**अबाधितप्रत्यभिज्ञाबलाद् वर्णस्य नित्यता।**
**उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते॥22॥**

## प्रकाशिका

विध्यादिरूपः विधिमन्त्रार्थवादनामधेयात्मकः शब्दः अनित्यः अथ = उत अविनश्वरः = नित्य इति सन्देहे शब्दस्य वर्णरूपत्वाद् वर्णे च जन्मोपलम्भनात् शब्दः अनित्य इति पूर्वपक्षे प्राप्ते "सोऽयं गकारः" इत्यबाधितप्रत्यभिज्ञाबलात् प्रत्यभिज्ञाप्रमाणात् वर्णस्य नित्यता युक्तेति सिद्धान्तः। उच्चारणप्रयत्नेन वर्णोऽभिव्यज्यते न तु जन्यते इत्यर्थः।

अयं भावः–अकारादिवर्णा एव शब्दपदवाच्याः ते च कण्ठताल्वादि-संयोगेनोत्पद्यन्ते इति प्रत्यक्षसिद्धम्। उत्पन्नत्वादेव यत् कृतकं तदनित्यमिति व्याप्त्यानित्यत्वं निश्चीयते। अत्रायं प्रयोगः–शब्दोऽनित्यः कृतकत्वाद् घटवदिति। अतः शब्दा अनित्या इति नैयायिकानां पूर्वपक्षे प्राप्ते समाधिरभिधीयते–अनित्यत्वं नैयायिकानां यदभिप्रेतं शब्दानां विषये तत् क्षणिकत्वमेव, "सोऽयं गकारः सोऽयं णकारः" इति प्रत्यभिज्ञा च शब्दस्य स्थायित्वं बोधयति, यथा "सोऽयं घटः" इति प्रत्यभिज्ञया घटस्य स्थायित्वं सिद्ध्यति। यद्यपि "सोऽयं घट" इति प्रत्यभिज्ञया घटस्य स्थायित्वमेव न तु नित्यत्वं सिद्ध्यति तथापि शब्दस्य केवलं स्थायित्वं न स्वीक्रियते अपि तु नित्यत्वमेव। अत्र प्रत्यभिज्ञया घटवत् शब्दोऽनित्यः कृतकत्वादित्यनुमानस्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"गकार उत्पन्नः" इति प्रतीतिसहकृतस्य बाधो भवति। तेन च कृतकत्वाभावादेव शब्दस्य नित्यत्वं सिद्ध्यति। घटस्योत्पत्तेः प्रत्यक्षसिद्धत्वाद् घटस्य कृतकत्वाभावाभावादेव नित्यत्वं नास्ति किन्तु प्रत्यभिज्ञया प्रतिक्षणं घटोभिद्यते इति बौद्धानां क्षणिकत्ववादस्यैव निवृत्तिरिति विशेषः। "गकार उत्पन्न" इति प्रीतीतस्तु ध्वनीनाञ्च वर्णाभिव्यञ्जकत्वमेव। तदुक्तम्– "उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते।" इति। किञ्च शब्दस्यानित्यत्वे तस्य ध्वंसः, तत्कारणम्, तत्प्रागभाव इत्यादिबहुपदार्थानां कल्पनापेक्षिता।[1]

अतः गौरवादपि शब्दस्य नित्यत्वमेव युक्तम्। एवञ्च शब्दस्य नित्यत्वादेव कारणदोषसम्भवाभावाद्विधेः प्रामाण्यं स्थितम्।

"अथातो धर्मजिज्ञासा"[1] इति विचार्यतया प्रतिज्ञातो धर्मः यागादिरूपः इति "चोदनालक्षणोऽर्थो धर्मः "इति द्वितीयेऽधिकरणे निर्णीतः। स च धर्मः "यजेत स्वर्गकामः इत्यादिवाक्यगम्यो यागादिः स्वर्गादिफलसाधनत्वांशो नैकेन पदेनोच्यते वाक्यार्थस्य च किं मूलमिति विषये वादिनां विप्रतित्तेर्दर्शनात् पदस्य पदार्थस्य च नित्यत्वेऽपि वाक्यार्थप्रत्ययस्य यावन्मूलं किमिति न निश्चीयते तावद्वाक्यगम्यस्य धर्मस्यापि निश्चयो न भवतीति वाक्यार्थज्ञानस्य किं मूलमिति विचवेचनार्थं सप्तममधिकरणमारभ्यते–

## जैमिनीयन्यायमाला

**वेदवाक्यममानं स्यान्मानं वा नास्य मानता।**
**पृथक्सङ्गत्यपेक्षायामनपेक्षत्ववर्जनात्** ॥23॥

## प्रकाशिका

वेदवाक्यम् अमानम् = अप्रमाणम्, मानं वा = प्रमाणं वा, वेदवाक्यं प्रामाण्यं नास्तीति पूर्वपक्षः। अत्र हेतुः–वाक्यार्थज्ञानं प्रति पृथक्सङ्गत्यपेक्षायाम् = पृथक् शक्तिग्रहः अपेक्षितश्चेत्, अनपेक्षत्ववर्जनात्= निरपेक्षत्वाभावात् स्वतः प्रामाण्यं न सिद्ध्यतीति शेषः। अयमाशयः- वाक्यार्थं किं प्रत्येकं पदानि बोधयन्ति? उत पदसमूहात्मकं वाक्यम्?

---

1. मी.द. 1.1.1.

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पदार्था वा? इति त्रिधा विकल्पा भवितुमर्हन्ति। चतुर्थस्य विकल्पस्य प्रसक्तिरेव नास्ति। उक्तेषु त्रिषु कल्पेषु कः कल्पः युक्त इति विचारणीयम्। अत्र नैकोऽपि कल्पः उपपद्यते इति पूर्वपक्षः। यतः प्रथमकल्पे प्रत्येकं पदानि वाक्यार्थं यदि बोधयन्ति तदा तदितरपदानां वैय्यर्थ्यापत्तिः। पदानां वाक्यार्थविशेषशक्तिग्रहाभावात् वाक्यार्थविशेषस्य परिज्ञानासम्भवञ्च। द्वितीयकल्पेऽपि पदसमूहात्मकवाक्यस्य वाक्यार्थविशेषे शक्तिग्रहाभावाद्वाक्यार्थबोधो भवितुं नार्हति। विनापि शक्तिग्रहं बोधो भवतीति चेद् बालानामपि बोधप्रसङ्गः, व्युत्पत्तिवैय्यर्थ्यञ्च। तृतीयेऽपि कल्पे पदार्था एव वाक्यार्थं बोधयन्ति चेत् वाक्यार्थविशेषेण सह पदार्थस्य सम्बन्धाग्रहणादेव वाक्यार्थबोधो न सम्भवति। एवञ्च वाक्यार्थबोधाय उक्तत्रिविधमूलत्वस्यासम्भवात् मूलान्तरस्य चानुपपत्तेः निर्मूलो वाक्यार्थ इति तद्बोधार्थं पृथक्सङ्गतिरपेक्षते तथा च वेदवाक्यार्थभूतधर्मज्ञानार्थमपि पृथक्सङ्गतिरपेक्षते, तदर्थं वेदवाक्यानामपि पौरुषेयत्वमाश्रित्य पुरुषप्रामाण्यादेव प्रामाण्यं स्वीकार्यम्, तेन च वेदस्य निरपेक्षप्रामाण्यम् "औत्पत्तिकाधिकरणे" "बादरायणस्यानपेक्षत्वात्" इति यत् सधितं तन्न सिद्ध्यतीति। एतदेवोक्तम्-पृथक्सङ्गत्यपेक्षायामनपेक्षत्ववर्जनाद्" इति।

एवं पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते–

## जैमिनीयन्यायमाला

**वेदेऽपि लोकवन्नैव वाक्यार्थे सङ्गतिः पृथक्।**
**ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः॥24॥** इति

## प्रकाशिका

वेदेऽपि वाक्यार्थे = वाक्यार्थबोधे लोकवन्नैव सङ्गतिः= शक्तिग्रहः पृथक् ग्रहीतव्या, ततः नैरपेक्ष्यतः वाक्यं प्रमाणम् = स्वतः प्रमाणमित्यर्थः।

**अयमभिप्रायः**–वाक्यार्थबोधस्य पदमूलत्वं पदसमूहात्मकवाक्यमूलत्वं वा न स्वीक्रियते प्रत्येकं पदानां पदसमूहात्मकवाक्यस्य वा वाक्यार्थविशेषैः सह शक्तिग्रहाभावात्, परन्तु वाक्यार्थो निर्मूल इति तु न युक्तम् वाक्यार्थबोधस्य पदार्थज्ञानमूलत्वं सङ्गच्छते। पदैरभिहितैः पदार्थैः वाक्यार्थबोधः। अतः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाक्यार्थो न निर्मूलो न वा साङ्केतिक इति वेदवाक्यार्थभूतधर्मबोधने वेदवाक्यं निरपेक्षं प्रमाणं भवति। यदुक्तं सम्बन्धाभावात्पदार्थानां वाक्यार्थबोधे निमित्तत्वं न सङ्गच्छते इति तत्रोच्यते–आकाङ्क्षासन्निधियोग्यतावशेन सम्बद्धाः पदैरभिहिताः पदार्था वाक्यार्थं बोधयन्तीति स्वीक्रियते। अत्र सामान्यं पदार्थः विशेषो वाक्यार्थः, अतः सामान्यविशेषलक्षणः सम्बन्धः। आकाङ्क्षासन्निधियोग्यत्वैश्च नियमः। यथा धूमसामान्येन पर्वते वह्निविशेषस्य सिद्धिरनुमानेन भवति तथा सामान्यं पदार्थः तैर्वाक्यार्थविशेषस्य सिद्धिर्भवति। गामानय, गां नय, गांबधान इति बहुषु वाक्येषु गोपदार्थोऽनुगतः सामान्यम् एवमानयपदार्थोऽपि घटमानय, पटमानयेति बहुषु अनुगतः सामान्यम् गामानय इत्यादिवाक्यार्थास्तु विशेषाः। सर्वविशेषसाधारणत्वेऽपि सामान्यस्याकाङ्क्षा सन्निधियोग्यतावशात् गामानय इति विशेषवाक्येन गोरेवानयनं प्रतीयते। गोपदार्थानयपदार्थयोरन्वयः समभिव्याहारात्मकैकवाक्यतावशादेव सिद्ध्यतीति व्याप्तिज्ञानजन्यानुमानात् मानान्तरत्वं शब्दस्य निश्चीयते। अत्रैवं शङ्का भवितुमर्हति पदार्थवाक्यार्थयोर्मध्ये सामान्यविशेषलक्षणः सम्बन्धः स्वीकृतश्चेत् गामानयेति वाक्ये गोनिष्ठं कर्मत्वं गामित्यनेन, आनयनविधिरानयेत्यनेन चावगम्येते। आनयनगोपपदार्थयोरन्वयस्तु आकाङ्क्षासन्निधियोग्यत्वैरिति वक्तव्यम्, परन्तु आकाङ्क्षासन्निधियोग्यतामात्रेण कुत्रापि सम्बन्धबोधो न भवति यथा सन्निहिते गवि कस्य गौरस्तीति जिज्ञासायां सन्निहितेऽपि गोस्वामिनि देवदत्ते देवदत्तस्यात्र गौरिति ज्ञानमर्थात् प्रत्यक्षेणात्र पदार्थानामुपस्थितिः आकाङ्क्षासन्निधियोग्यत्वेषु सत्स्वपि देवदत्तस्य गोश्च सम्बन्धो नावबुध्यते इति। अत्र समाधानम् यत्र पदार्थानामुपस्थितिः शब्दप्रमाणेन भवति तत्र पदकदम्बसमभिव्याहारात्मकैकवाक्यतावशात् आकाङ्क्षासन्निधियोग्यता-सहकारेणोपस्थितानामेव पदार्थानामन्वयः वाक्यार्थविशेषात्मको भवतीति स्वीकारात् प्रमाणा- न्तरेणोपस्थितेषु पदार्थेषु जिज्ञासादिषु सत्स्वपि सम्बन्धो नावगम्यते चेन्न कोपि दोषः। उक्तञ्च मिश्रै–"विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जनैः इति। एवञ्च विशिष्टार्थप्रत्यायनप्रयुक्तपदकदम्बसमभि-व्याहारान्यथानुपपत्त्या पदाभिहितानां पदार्थानामन्योन्यान्वयस्य लक्ष्यमाणत्वा-द्वाक्यार्थः पदार्थमूल एव न निर्मूलः न वा साङ्केतिक इति सिद्धम्। लौकिकवाक्येषु च समभिव्याहारस्य वक्तृविवक्षाधीनत्वात्तद्बुद्ध्यधीनं प्रामाण्यम्,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेदे तु नियतानुपूर्वीक्रमस्यापौरुषेयत्वादनपेक्षं प्रामाण्यं सिद्ध्यति। अतः वाक्यार्थभूते धर्मे वाक्यार्थबोधस्य पदार्थबोधमूलत्वात् पदस्य पदार्थस्य तयोः सम्बन्धस्य च नित्यत्वस्यौत्पत्तिकाधिकरणे साधितत्वाद् वेदवाक्यस्य नैरपेक्ष्यं प्रामाण्यं सिद्ध्यति।

अष्टमाधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता।**
**काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत्॥25॥**

**प्रकाशिका**

वेदवाक्यं पौरुषेयं न वेति सन्देहे काठकादिसमाख्यानात् = काठकम् शाकलम्, कौथुमम्, तैत्तिरीयकम्, इत्यादिशाखाभेदानां समाख्याया दर्शनात् तत्तदृषिप्रोक्तत्वज्ञानात्, वाक्यत्वात् = वाक्यत्वहेतुकानुमानेन पौरुषेयत्वं वेदवाक्यानां सिद्ध्यतीति शेषः।

अयं भावः – पूर्वाधिकरणे वाक्यार्थस्य पदार्थमूलत्वात् वेदे च नियतानुपूर्वीक्रमवद्वाक्यानामपौरुषेयतयानपेक्षं प्रामाण्यम्, लोके तु पदानां समभिव्याहारस्य वक्तृविवक्षाधीनत्वात् तद्बुद्ध्यधीनं प्रामाण्यमिति भेद उक्तः। तत्र वेदवाक्यमपि वाक्यमेवात:वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदास-वाक्यवदिति वेदस्यापौरुषयोत्त्वं कथमिति पूर्वपक्षः। एतदुपोद्बलकतया कठाः, तैत्तिरीयाः, शाकलाः, इत्यादिसमाख्याप्युपयुज्यते। अत्र "शाकलाद्वा" इति सूत्रेण शाकलेन प्रोक्तमधीयते शाकलाः, "कठचरकाल्लुक्" इति सूत्रेण कठेन प्रोक्तमधीयत काठाः इति शाकलाः, कठाः इत्यादिशब्दाः, व्याकरणसूत्रैः निष्पन्नाः। अत्र चरकेण प्रोक्तमधीयत चरका इत्यत्र चरकप्रोक्तत्वं नाम चरककृतत्वमेव, चरकेणैव प्रोक्तमित्यर्थाल्लभ्यते, "असति बाधे सर्वं वाक्यं सावधारणमि-" ति न्यायात्। एतच्च सर्वैः प्रायः स्वीक्रियत एव। "मलं शरीरस्य तु वैद्यकेन" इति वचनाच्चरकसंहितायाः पतञ्जलिकृतित्वं ये मन्यन्ते तन्मते तु पतञ्जलिः एव चरकः स्वातन्त्र्येण वाक्यरचयितृत्वं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चरकस्य न व्याहन्यते। एवमेव कठेन प्रोक्तमित्यत्रापि कठेनैव प्रोक्तमिति स्वातन्त्र्येण वाक्यरचयितृत्वं कठस्य ज्ञायते, एवमेव शाकलाः, इत्यादिसमाख्याभिरपि शाकालादीनां तत्तद्वेदस्य कर्तृत्वमेव ज्ञायते। ननु समाख्यया कथं वेदवाक्यानां पौरुषेयत्वं सिद्ध्यति? यतः सामान्यप्राप्तौ सत्यां विशेषनियमार्था समाख्या भवति, यथर्त्विजां सामान्यतः पदार्थेष्वनियमेन कर्तृत्वे प्राप्ते आध्वर्यवादिसमाख्यया नियमः क्रियते। न चेह वेदानां सामान्येन कश्चित् कर्ता प्राप्तो यतः कठादिसमाख्यया कठादयस्तत्तद्वेदस्य कर्तृत्वेन नियम्येरन्निति चेत् श्रूयताम्, वेदवाक्यानां वाक्यत्वादेव पौरुषेयत्वे सिद्धे तस्य तस्य वेदस्य कर्ता कः इति जिज्ञासायां कठादिसमाख्यया कठादयस्तत्तद्वेदस्य कर्तार इति निश्चयो भवति इति न दोषः। एवञ्च वेदवाक्यानां पौरुषेयत्वमिति पूर्वपक्षे प्राप्ते सिद्धान्तो निरूप्यते–

## जैमिनीयन्यायमाला

**समाख्याध्यापकत्वेन वाक्यत्वन्तु पराहतम्।**
**तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता॥26॥**

## प्रकाशिका

अध्यापकत्वेन प्रवचनकर्तृत्वेन समाख्या=काठकादिसमाख्या उपपद्यते वाक्यत्वन्तु=वाक्यत्वहेतुः पराहतम्=सत्प्रतिपक्षानुमानग्रस्तम्, अत्र हेतुः तत्कर्त्रनुपलम्भेन=वेदवाक्यानां कर्तुरस्मरणात् ततोऽपौरुषेयता स्यात्। अयमाशयः= काठकम्, कालापम्, पैप्पलादमित्यादिसमाख्या वैदिकेषु प्रसिद्धा। श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्येति षट् प्रमाणानि सर्वैः स्वीक्रियन्ते एव। ''आख्या चैव तदर्थत्वादि'' ति तृतीयतृतीये षष्ठेऽधिकरणे समाख्यायाः प्रामाण्यमुपपाद-यिष्यत एवातः समाख्यया कठादीनां तत्तद्वेदकर्तृत्वं पूर्वपक्षिणामभिप्रेतम्। अत्रेदं विचारणीयम् समाख्या कथं प्रमाणमिति। समाख्या नाम यौगिकः शब्दः, यौगिकशब्दैश्च साक्षात् सम्बन्धो नाभिधीयते यथा "दण्डी" त्यत्र प्रकृत्या दण्डस्वरूपमुच्यते, प्रत्येन च पुरुषः। तयोः सम्बन्धस्तु कस्यापि शब्दस्य वाच्यो नास्ति, समभिव्याहारात् कल्प्यः। तदुक्तम्–

"पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः। पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचिद्॥" इति। एवञ्च समाख्या न स्वतः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रमाणमपि तु स्थानप्रकरणवाक्यलिङ्गश्रुतिकल्पनद्वारा प्रमाणं भवति। प्रकृते च काठकम्, जैमिनीयम् इत्यादिसमाख्यानैः प्रकृतिप्रत्ययभ्यां कठादिरूपम् प्रोक्तत्वरूपञ्च ज्ञायेते। तत्र समभिव्याहारादेव कठप्रोक्तत्वं वक्तव्यम्, तच्च प्रोक्तत्वं द्विधा भवितुमर्हति स्वतन्त्रेण वाक्यरचयितृत्वेन यथा चरकप्रोक्ता चरकसंहितेति। प्रवचनातिशयनिमित्तेन यथाऽयं पौराणिक इति। अत्र काठकमित्यत्र प्रोक्तत्वं कीदृशमिति चेन् नादिमः प्रकारः सम्भवति, वाक्यत्वेन वेदस्य पौरुषेयत्वे सिद्धे काठकमित्यत्र कठेनैव प्रोक्तम्, कठोऽस्य कर्ता इति वक्तुं शक्यते, परन्तु वाक्यत्वहेतुः वेदवाक्यस्य पौरुषेयत्वसाधने नालम्। विवादाध्यासितं वेदाध्ययनमध्ययनपूर्वकम्, अध्ययनत्वात् इदानीन्तनाध्ययनवत्, तदुक्तम् वेदस्यांध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। वेदाध्ययनसामान्यादधुनाध्ययनं यथा।। इति। वेदवाक्यान्यपौरुषेयाणि सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकवाक्यत्वात् यन्नैवं तन्नैव यथा लौकिकं वाक्यम् इत्याद्यनुमानैः "वाचा विरूप नित्यया" अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" "स्वयम्भूरेष भगवान्वेदो गीतः स्वयम्भुवा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः। वेदनित्यत्वबोधकश्रुतिस्मृतिसहकृतैः वेदस्य नित्यत्वसाधनात्। अतः अत्र प्रोक्तत्वं काठकमित्यादौ प्रवचनातिशयनिबन्धनतयैव स्वीकार्यम्। प्रवचनातिशयश्च पदविभागक्रमपाठतदर्थख्यापनादिकमेव। एतदेवोक्तम् समाख्याध्यपकत्वेन वाक्यत्वन्तु पराहतम्" इति। अत्राध्यापकत्वं प्रवचनकर्तृत्वमेव। एवञ्च वेदानामपौरुषेयत्वात् धर्मेऽनपेक्षं प्रामाण्यं सिद्धम्।

**धर्मे वेदः प्रमाणं निखिलमिति दृढं हेतुभिः साधितं यत्।**
**सामान्येनैव तत्तु श्रुतिगतविधिवाक्साधनस्य प्रसङ्गे।।**
**अग्रे वादादिसर्वं प्रमितिकरणमित्येव तत्त्वञ्च सम्यक्।**
**शास्त्रेऽध्यायेऽत्र पूर्णे त्रिभिरिह चरणैश्चिन्त्यते जैमिनीये।।**



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## द्वितीयः पादः

# प्रथममर्थवादाधिकरणम्

### प्रकाशिंका

अस्मिन् पादेऽर्थवादवाक्यानां मन्त्राणाञ्च प्रामाण्यप्रकारो विचार्यते। पूर्वस्मिन् पादे तर्कपादे 'चोदनालक्षणोऽर्थो धर्मः इत्यनेन सूत्रेण चोदनैव धर्मे प्रमाणम् चोदना धर्मे प्रमाणमेवेति निरूपितम्। अत्र सूत्रे लक्ष्यतेऽनेनेति लक्षणं प्रमाणमित्यर्थः।" असति बाधे सर्वं वाक्यं सावधारणम्" इति न्यायेन चोदनैव धर्मे प्रमाणमित्येकं व्याख्यानम्। अत्रैवकारेण चोदनाभिन्नानां धर्मे प्रामाण्यं निरस्यते। चोदनाभिन्नानां धर्मे प्रामाण्यनिरासार्थमेकमेवाधिकरणं सत्सम्प्रयोगे पुरुषेन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" इति। अत्र साक्षात् प्रत्यक्षस्य धर्मे प्रामाण्यं निरस्यते। प्रत्यक्षस्य धर्मे प्रामाण्ये निरस्ते तदनुजायमानानामनुमानादीनामपि प्रामाण्यं निरस्तमेव भवति। एवञ्च धर्मे स्वातन्त्र्येण प्रमाणीबुभूषतां प्रत्यक्षादीनामेव धर्मे प्रामाण्यं निरस्तमिति अर्थवादमन्त्रनामधेयात्मकवेदवाक्यानां प्रामाण्यं वेदमूलतया प्रमाणीभवतां स्मृत्यादीनाञ्च प्रामाण्यं न साधितम्, न वा निराकृतमिति ज्ञायते। अग्रे च पञ्चमाधिकरणादारभ्यापादसमाप्तिं यावच्चतुर्भिरधिया-करणैर्वेदस्य प्रामाण्यं सपरिकरं निरूपितम्। एवञ्चार्थवादादीनां प्रामाण्यं प्रथमपादे साधितमेव, परन्तु "अथातो धर्मजिज्ञासा" इति जिज्ञासाधिकरणे जिज्ञास्यतया प्रतिज्ञातो धर्मः क इति विशये "चोदना" सूत्रेण विधिलक्षणो धर्म इत्युक्तमतस्तद्भिन्नानामर्थवादीनां कथं प्रामाण्यमित्याक्षेपे प्राप्ते तत्समाधानाय प्रवृत्तो द्वितीयः पादः। अतः आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्याक्षेपसूत्रं सङ्गच्छते। भट्टाचार्यैः स्पष्टमुक्तम्–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः।[1]**
**विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते।।**

सामान्यतः प्रामाण्ये सिद्धेऽधुना विभज्य विनियोगः प्रतिपाद्यते। अवधृतप्रामाण्यस्य वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मम्प्रत्युपयोगः प्रतिपाद्यते इति अत्र भट्टाचार्याणामभिप्रायः स्पष्टं विज्ञायते! सामान्यतः समस्तस्य वेदस्य प्रामाण्यं विशिष्य च विधिभागस्य प्रामाण्यं पूर्वपादे प्रसाधितम्, अत्र तु अर्थवदादिभागानां विशिष्य प्रामाण्यचिन्ता प्रस्तूयत इति। एवञ्च "अथातो धर्मजिज्ञासे" ति प्रतिज्ञासूत्रेण को धर्मः कथंलक्षणकः इति स्वरूपप्रमाणसाधनफलैर्विचार्यतया प्रतिज्ञाते धर्मे "मानाधीना मेयसिद्धिः "इति सर्वतन्त्रसिद्धान्तमाश्रित्य मेयसिद्ध्यर्थं प्रथमेऽध्याये प्रमाणं निरूप्यते, तेन प्रामाण्यप्रकारनिरूपणस्यापि प्रमाणनिरूपणेऽपेक्षित-त्वादर्थवादादीनां कथं प्रामाण्यमिति निरूपणस्यापि धर्मप्रमाणविचारत्वा-दस्त्यध्यायसङ्गतिः। प्रथमपादे शब्दार्थयोः सम्बन्धस्ययानित्यत्वात् शब्दस्याप्यनित्यत्वात् वेदवाक्यानाञ्च रामायणादिवाक्यवत् पौरुषेयत्वात्कथं स्वतः प्रामाण्यं धर्म इत्याशङ्क्या वेदावयभूतानां चोदनानामपि पौरुषेयत्वद्वारा परतः प्रामाण्ये प्राप्ते वेदस्यापौरुषेयत्वद्वारा स्वतःप्रामाण्यं तदवयवभूतानां चोदनानामिष्टसाधनताबोधनद्वारा धर्मे प्रामाण्ये साधिते वेदावयवत्त्वेनोपस्थिता-नामर्थवादादीनां चोदनाभिन्नानां प्रामाण्यनिरूपणं प्रसङ्गतः प्राप्तमिति प्रसङ्गसङ्गतिः प्रथमेन पादेन सहेति ज्ञायते। क्रियावाचकविधीनामनधि-गतार्थबोधकत्वेन प्रामाण्यस्य निर्वाहेऽपि सिद्धार्थबोधकानामर्थवादादीनामनधि-गतार्थबोधकत्वाभावेन कथं प्रामाण्यनिर्वाह इत्याक्षेपे प्राप्ते आक्षेपनिरासमुखेन प्रामाण्यस्थापनार्थं पादस्यास्यारम्भ इत्याक्षेपसङ्गतिरपि वक्तुं शक्यते।

शास्त्रदीपिका तु प्रथमपादे चोदनाया एव प्रामाण्यमुक्तमर्थवादादीनान्तु न वा साधितम् न वा निरस्तमतस्तेषां प्रामाण्यमत्र निरूप्यते इति प्रतिपादयति। तथाहि-चोदनासूत्रे प्रतिज्ञातं भेदशेषप्रयुक्तिक्रमनियमाधिकारातिदेश-बाधोहतन्त्रप्रसङ्गेतिसर्वविशेषणविशिष्टे धर्मस्वरूपे चोदनैव प्रमाणं प्रमाणमेव चोदनेति तत्र चोदनैवेत्यवधारणेन यच्चोदनानिरपेक्षाणां तया सह तुल्यकक्षतया

1. तन्त्रवार्त्तिके

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्पर्धमानानां प्रत्यक्षादीनामप्रामाण्यं प्रतिज्ञातं तत्प्रत्यक्षसूत्रेण साधितम्। "औत्पत्तिकस्त्वि"-त्यादिना पादशेषेण प्रमाणमेवेत्ययमंशः साधितः। तदेवमस्मिन्नेव पादे चोदनासूत्रप्रतिज्ञातार्थविशेषे साधिते उपरितनं पादत्रयं चोदनासूत्रशेषतया न सङ्गच्छते किन्तु प्रथमे सूत्रे किं लक्षणो धर्म इति धर्मस्य प्रमाणं वक्तव्यत्वेन प्रतिज्ञातं तत्रानेन पादेन चोदनायाः प्रामाण्यमुक्त्वा अर्थवादस्मृतिनामधेयानामुपरितनेन पादत्रयेण प्रामाण्यं प्रतिपाद्यते तेन चोदनासूत्रवदेव पादत्रयं जिज्ञासासूत्रोक्ततया को धर्म इत्यनयैव प्रतिज्ञया सङ्गच्छते इति। अत्र च प्रमाणत्वेन मिश्रपादैः श्लोकोऽयमुदाहृतः–

**इति प्रमाणत्वमिदं प्रसिद्धमुक्त्वेह धर्मं प्रति चोदनायाः।**
**अतः परन्तु प्रविभज्य वेदं त्रेधा ततो वक्ष्यति तस्य योऽर्थः।।**

इति। एवञ्च मिश्रपादानामाशय एवं भाति–चोदनासूत्रं चोदनाया एव धर्मे प्रामाण्यं प्रतिपादयति, तद्भिन्नानां प्रत्यक्षादिस्वतन्त्रप्रमाणानां प्रामाण्यं निराकरोति च। वेदावयवभूतानामर्थवादादीनां वेदमूलतया स्थितानां स्मृत्यादीनाञ्च धर्मे प्रामाण्यस्य साधनस्य निरासस्य वात्र प्रसक्तिरेव नास्ति। यथा "शुक्लघटोऽस्ति गृहे इति वाक्यं रक्तघटस्यैवाभावं बोधयति न तु पटादीनामभावं बोधयति तथा चोदनालक्षणोऽर्थो धर्म इति सूत्रे चोदनेत्यवधारणेन प्रत्यक्षादीनामेव धर्मे प्रमाण्यं निराक्रियते। तदनु चोदनासूत्रोक्तार्थसाधनाय प्रवृत्तानि" औत्पत्तिकस्त्वाद्य" धिकरणानि चोदनाया एव धर्मे प्रामाण्यं दृढ़ीकुर्वन्ति। तद्भिन्नानामर्थवादादीनां प्रामाण्यं न साधयन्ति न वा निराकुर्वन्ति। अतः अर्थवादादीनां विचारस्यात्र प्रवृत्तिरिति अत्रायं सङ्ग्रहश्लोकः–

**प्रामाण्यं चोदनाया अधिकरणगणैः साधनस्य प्रसक्ते-**
**राद्ये पादे तदेव श्रुतिमतधिषणैः साधितं नैव चान्यत्।**
**तस्माद्वादादिवाक्ये प्रमितिकरणता बोधनीयैव साक्षा-**
**दित्येवं सम्प्रवृत्ता इह चरणविधा मिश्रपादोक्तरीत्या।।** इति

अत्रेदं विचारणीयम्-किं चोदनासूत्रं विधेरेव प्रामाण्यं धर्मे बोधयति उत तच्छेषतया तन्मूलतया स्थितानामर्थवादादीनां प्रामाण्यमपि बोधयतीति। आद्ये "सत्सम्प्रयोगे" इति सूत्रेण प्रत्यक्षादीनामेव धर्मे प्रामाण्यस्य निराकरणम्,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"औत्पत्तिरकस्त्वाद्य" धिकरणैश्च वेदस्य समस्तस्यैव प्रामाण्यमिति साधनम्, तदर्थं तस्य निमित्तपरीष्टिः इति प्रतिज्ञाकरणम् किमर्थमिति चिन्त्यम्। यतः अस्मिन् पक्षे चोदनासूत्रे चोदनैव प्रमाणमित्यनेनार्थवादादीनां प्रामाण्यं न निराकृतं न वा प्रतिज्ञातमिति स्वीक्रियते, अत आदौ चोदनायाः प्रामाण्ये हेतुर्वक्तव्यः, निमित्तपरीक्षाप्रतिज्ञा केवलं सुखग्रहणार्था स्यात्, समग्रस्य वेदस्य प्रामाण्यस्य साधनं नातीवसङ्गतञ्च स्यात्। द्वितीयपक्षे तु चोदनैव प्रमाणमिति साक्षाद्धर्मप्रमाणस्य चोदनावाक्यस्य प्रामाण्यप्रतिज्ञायां तदैकवक्यतया तन्मूलतया चार्थवादस्मृत्यादीनामपि प्रामाण्यमर्थात् प्रतिज्ञातं भवति। चोदनैवेत्यवधारणञ्च प्रत्यक्षादीनां चोदनानिरपेक्षाणां बाह्यागमानां धर्मे प्रामाण्यं व्यावर्तयति। अतः चोदनार्थवादादीनां समानरूपेण धर्मे प्रमाणत्वेन प्रतिज्ञा चोदनासूत्रोक्तेति तत्साधनाय "सत्सम्प्रयोग" इत्याद्यधिकरणैः हेतुरभिधीयते। तत्र कस्य वेदभागस्य प्रामाण्ये हेतुरभिधीयत इति जिज्ञासायां चोदनाख्यस्य धर्मनिमित्तस्य परीक्षणं प्रतिज्ञायते" तस्य निमित्तपरीष्टिः" इत्यत्रेति प्रथमपादार्थप्रतिज्ञा स्पष्टं सङ्गच्छते। तदनु विशिष्य विधिभागस्यानधिगताबाधित-प्रयोजनवदर्थप्रतिपादनद्वारा धर्मे प्रामाण्यं प्रथमपादेन प्रसाध्यते। एवञ्चास्मिन् पक्षे "अथातो धर्मजिज्ञासे" ति समग्रस्य शास्त्रस्य प्रतिज्ञा, चोदनालक्षणोऽर्थो धर्म इति प्रमाणाध्यायस्य प्रथमाध्यायस्य प्रतिज्ञा, "तस्य निमित्तपरीष्टिः" इति प्रथमपादस्य विधिभागस्य प्रतिज्ञेति प्रतिज्ञात्रयं स्पष्टं सङ्गच्छते। अत्र द्वितीयपादे च पूर्वपादेऽर्थवादादीनां प्रामाण्यं सामान्यतः प्रतिज्ञातं यत् तदर्थवादेषु कथं सङ्गच्छते अनधिगतार्थबोधकत्वाभावादित्याक्षेप निराकरणपूर्वकं कथमर्थवादादीनां प्रामाण्यमिति विचार्यते। अत्रायं सङ्ग्रहश्लोकः

> सत्यं सूत्रे द्वितीये प्रमितिकरणता साधिता चोदनाया-
> स्तेनैवैतच्च सिद्धं विधिचरणबलान्मानता वादजाते।
> द्वारं किन्तत्र चेति स्थितमिह मननन्तद्द्वितीये च पादे
> सम्यक्सञ्चिन्त्य युक्त्या विधिनयनिपुणैः साध्यते सप्रमाणम्॥
>
> प्रामाण्यं चोदनायाः स्थितमिति च पुनः तस्य हेतोः परीष्टि-
> र्व्यर्था मिश्रोक्तरीत्या पुनरिह तु मते यद्विधेर्मानतायाम्।
> धर्मे हेतुत्वबोधः कथमिति विशये सार्थिका सा प्रतिज्ञा।
> तस्मात्सिद्धञ्च वेदे प्रमितिकरणता तर्कपादे हि शास्त्रे॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र च पक्षे "इति प्रमाणत्वमिदं प्रसिद्धमुक्त्वेह धर्मं प्रति चोदनायाः। अतः परन्तु प्रविभज्य वेदं त्रेधा ततो वक्ष्यति तस्य योऽर्थः" इति आचार्योक्तिरपि न विरुद्ध्यते। अत्र हि प्रविभज्य वेदं त्रेधा इत्युक्त्या वेदमात्रस्यैव प्रामाण्यं प्रथमे पादेऽभिहितम् कथन्तेषां प्रामाण्यं प्रथमे पादेऽभिहितम्, कथन्तेषां प्रामाण्यमिति प्रामाण्यद्वारं प्रतिपादयिष्यत अतः परमिति भावः। द्वितीयपादारम्भेऽपि तन्त्रवार्तिके "सामान्यतः प्रामाण्ये सिद्धेऽधुना विभज्य विनियोगः प्रतिपाद्यत" इत्युक्तम्। अत्र त्रेधा इति विध्यर्थवादमन्त्रभेदा विवक्षिताः। द्वितीयपादे मन्त्रार्थवादयोरेवोपयोगस्य वक्ष्यमाणत्वाद्विध्यर्थवादमन्त्रभेदाः साक्षादुक्ताः। इदञ्च नामधेयस्याप्युपलक्षणम्। अत एव भट्टाचार्यैरुक्तं तत्रैव-"अवधृतप्रामाण्यस्य वा वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रत्युपयोगः प्रतिपाद्यत" इति। यद्यपि विधीनामुपयोगस्य प्रथमपाद एव विचारः कृतः तथापि सामान्यत उपयोगे विचार्ये सर्वेषामेवोदाहरणं न्याय्यमिति विध्यर्थवादमन्त्र-नामधेयानां ग्रहणम्।

एवञ्चापौरुषेयत्वादनधिगतप्रयोजनवदर्थबोधकत्वाद् वेदो धर्मे स्वतः प्रमाणमिति प्रथमपादे प्रतिपाद्याक्रियार्थानां वेदभागानां कथं धर्मे प्रामाण्यमिति विशिष्य प्रतिपादने द्वितीयः पादः प्रवर्तते-

तत्र प्रथममधिकरणं निरूप्यते-

### जैमिनीयन्यायमाला

**वायुर्वा इत्येवमादेरर्थवादस्य मानता।**
**न विधेयेऽस्ति धर्मे किं किं वासौ तत्र विद्यते॥1॥**

**विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात्।**
**नास्त्येकवाक्यता धर्मे प्रामाण्यं सम्भवेत् कुतः॥2॥**

### प्रकाशिका

'वायुर्वा क्षेपिष्ठा देवता' इत्येवमादेरर्थवादस्य = स्थितार्थस्य प्रतिपादकानां, स्थितं भूतं पदार्थं वदतीति अर्थवादः साक्षात् प्रवृत्तिनिवृत्ति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतिपादकाख्यातप्रत्ययरहिता अर्थवादास्तेषां विधेये धर्मे मानताप्रामाण्यं न विद्यते किंवासौ विद्यते इति संशयः।

विध्यर्थवादशब्दानां मिथः परस्परम् अपेक्षापरिक्षयात् आकाङ्क्षाया अभावात् एकवाक्यता नास्ति अतः धर्मे प्रमाण्यं कुतः सम्भवेत्? कथमपि न सम्भवतीति पूर्वपक्षः।

अयमाशयः श्रूयते काम्यपशुकाण्डे–"वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति वाक्यम्। इदञ्च वाक्यं कञ्चन वृत्तान्तं श्रावयति–क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागप्रदायैश्वर्यं प्रयच्छतीति। यथा "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः" इति वाक्यं हिमालयपर्वतस्योत्तरदिश्यस्तित्वं बोधयति। अत्र वाक्येन किमपि कर्तव्यं न विधीयते। धर्मश्च प्रतिज्ञातश्चोदनालक्षणोऽर्थः। अतः अक्रियार्थानां स्थितस्य वृत्तान्तस्य बोधकानामर्थवादानां कथं धर्मे प्रामाण्यमिति प्रश्न उदेति। यद्यप्यस्य वाक्यस्य सन्निधौ "वायव्यं श्वेतमालभेत" इति वायुदेवताकयागविधायकं वाक्यमस्ति तथापि इदं विधिवाक्यं स्वार्थबोधने अर्थाद्वायुदेवताकयागविधाने समर्थम्। पूर्णञ्चेदं वाक्यं क्रियापदकारकपदघटितं पदान्तरं नाकाङ्क्षते। यथा द्वारमित्युक्तौ पिंधेहि इति पदमपेक्षते, पिधेहीत्युक्तौ द्वारमिति पदान्तरमपेक्षते परस्परं पदयोः साकाङ्क्षत्वात्। "वायव्यं श्वेतमालभेत" इत्यत्र तु आलभेतेति क्रियापदम्, वायव्यं श्वेतमिति कारकपदमतः क्रियाकारकपदघटितत्त्वान्निराकाङ्क्षमिदं वाक्यं स्वार्थबोधने पदान्तरमपेक्षते। "वायुर्वै क्षेपिष्ठा देवता" इत्याद्यर्थवादवाक्यमपि क्रियाकारकपदघटितं "घटोऽस्ति" इति वाक्यवत्स्वार्थबोधे पदान्तरं नापेक्षते। एवञ्च विधिवाक्यार्थवादवाक्ययोः परस्परमाकाङ्क्षाया अभावादेकवाक्यता न सिद्ध्यति। एकवाक्यताया अभावादर्थवादवाक्यं विध्येकवाक्यतया धर्मे प्रमाणं भवतीति वक्तुं न शक्यत इति धर्मेऽर्थवादानां प्रामाण्यं नास्तीति पूर्वपक्षः। एवं पूर्वपक्षे प्राप्ते सिद्धान्तो निरूप्यते–

**जैमिनीयन्यायमाला**

**विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः।**
**तेनैकवाक्यता तस्माद्वादानां धर्ममानता॥3॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

प्राशस्त्यार्थं विधिः पुरुषार्थार्थमर्थवाद इति विध्यर्थवादौ साकाङ्क्षौ परस्परमाकाङ्क्षायुक्तौ तेन एकवाक्यता भवति। तस्माद् = विध्येकवाक्यतया वादानाम्–अर्थवादानां धर्ममानता = धर्मे प्रामाण्यं युज्यत इति शेषः।

अयमाशयः = यद्यपि विधिवाक्यं स्वार्थबोधने पदान्तरं नापेक्षते अर्थवादवाक्यञ्च पदान्तरं नापेक्षते तथापि विधिवाक्यं स्वविधेये प्रवृत्तिजननं विधेयार्थस्य प्राशस्त्यबोधमपेक्षते, तच्चार्थवादवाक्येन लभ्यते। अर्थवादवाक्यञ्च प्रयोजनवदर्थमपेक्षते तच्च विधिवाक्येन लभ्यते। एवञ्च विधिवाक्यस्य कथम्भावाकाङ्क्षार्थवादस्य च किमाकाङ्क्षेति द्वावपि साकाङ्क्षौ। साकाङ्क्षत्वादेव विध्यर्थवादयोरेकावाक्यता सिद्ध्यति। विधिवाक्यञ्चार्थवादेन सहैकवाक्यं सदयं यागः प्रशस्तः कर्तव्य इति स्वविधेये पुरुषं प्रवर्तयति। यद्यपि विधिरेव प्रवर्तकस्तथापि प्रवर्तकत्वशक्तिः प्राशस्त्यबोधेन अभिव्यज्यत इत्यर्थवादबोधितप्राशस्त्यज्ञानेन विधिः स्वविधेये पुरुषं प्रवर्तयति। अर्थवाद–वाक्यञ्च विधिवाक्येनैकवाक्यं सद्धर्मे प्रमाणं भवति यस्मादयं प्रशस्तो यागस्तस्मात्कर्तव्यः इति। अत्र जैमिनीयन्यायमालाविस्तरः–"मा भूत् पदैकवाक्यता। वाक्यैकवाक्यता तु विद्यते इति विध्यर्थवादयोर्वाक्यैकवाक्यतां बोधयति। अर्थवादानां धर्मे प्रामाण्यनिरूपणाय विध्यर्थवादयोरेकवाक्यता सर्वैरपि मीमांसकैः स्वीक्रियत एव। परन्तु सा एकवाक्यता पदैकवाक्यतारूपा वाक्यैकवाक्यतारूपा वेत्यत्र मतभेदः परिलक्ष्यते। मीमांसकमूर्धन्याः पदैकवाक्यतामेवात्र सङ्गिरन्ते। अन्ये तु वाक्यैकवाक्यतां समर्थयन्ति। अत्राचार्या वाक्यैकवाक्यतामेव समर्थयन्ति। तेषामयमाशयः–पदैकवाक्यता तु एकस्मिन्वाक्ये भवति यथा चैत्रो ग्रामं गच्छतीत्यत्र क्रियाकारकयोरेक–वाक्यतया ग्रामगमनानुकूलकृतिमान् चैत्रः चैत्रनिष्ठाग्रामगमनानुकूला कृतिरिति वा बोधो भवति। "न सुरां पिबेत्" इति नञ्वति वाक्ये सुरां पिबेदिति विधिरूपो बोधो न भवति अपि तु नञ्विशिष्टः सुरापाननिषेधरूप एक एव बोधः पदैकवाक्यतया सिद्ध्यति। "यत्परः शब्द स शब्दार्थः" इति न्यायात् अन्यपरः शब्दोऽन्यत्र प्रमाणं भवितुं नार्हति। लोके विशिष्टार्थप्रत्यायनायैव पदानां प्रवृत्तिः। न तु स्वार्थमात्रस्मारणे। अतः वाक्ये यावन्ति पदानि तानि सर्वाण्येकवाक्यतया वाक्यार्थमेकं बोधयन्ति न तु वाक्यार्थद्वयम्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाक्यभेदप्रसङ्गात् पदान्तरवैय्यर्थ्यापत्तेश्च। अत एव नञ्वति, वाक्ये विधानपर्यवसानं नास्ति तथा सति नञ्पदमनर्थकं स्यात्। तदुक्तं भट्टचार्यै–"साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले। वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्।।' इति। एवञ्च पदैकवाक्यतैकस्मिन् वाक्य एव भवतीति सिद्धम्। विध्यर्थवादयोविषय एवं स्थितिर्नास्ति, यतः विधिवाक्ये यावन्ति पदानि सन्ति तान्येकवाक्यतया वाक्यार्थमेकं बोधयन्ति, एवमर्थवादवाक्यञ्चेति वाक्ययोर्भेदात् पदैकवाक्यतायाः प्रसक्तिर्नास्ति।

यत्र तु एकैकस्य वाक्यस्य तन्तद्विशिष्टार्थप्रत्यायनेन पर्यवसितवृत्तिनः पश्चात्कुतश्चिद्धेतोः प्रयोजनान्तरापेक्षायामन्वयः कल्प्यते तत्र वाक्यैकवाक्यता भवति। यथा समिधो यजति इत्यादीन्यङ्गवाक्यानि, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति प्रधानवाक्यम्, स्वर्थबोधे पर्यवसितानामेतेषां वाक्यानाम-ङ्गाङ्गित्वाद्यपेक्षयैकवाक्यता कल्प्यते, अत्र वाक्यानामेकवाक्यतया प्रयाजाद्यङ्गैः दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति महावाक्यार्थबोधो भवति। विध्यर्थवादयोः स्थलेऽपि एवमेव विधिवाक्यं यागस्य कर्तव्यतां बोधयति "वायव्यं श्वेतमालभेत" इति, अत्र लोकानुसारतः यथा देवदत्तीयेयं गौः क्रेतव्येतिविधिवाक्यं गोः क्रयणे प्रवृत्तिजननार्थं एषा बहुक्षीरा" इत्यादिवाक्य बोधितं प्राशस्त्यमपेक्षते तथा वायव्यम्" इति विधिवाक्ये यागे प्रवृत्तिजननार्थं प्राशस्त्यज्ञानमपेक्षते। एतत्सन्निधौ पठितं "वायुर्वै क्षेपिष्ठा देवते-ति वाक्यं वायुदेवतायाः स्तुतिं प्रतिपादयत् किमर्थं वायोः स्तुतिरिति कैमर्थ्याकाङ्क्षायुक्तम्। यतः "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिः स्वाध्यायशब्दवाच्यं वेदराशिं अध्येय्यतया बोधयन् निरर्थकस्याध्ययने विध्यानर्थक्याद् अर्थवादादिसमेषां वेदवाक्यानां पुरुषार्थतां बोधयति। अतः अर्थवादाः वृत्तान्तादिगोचराः सन्तस्तत्तत्प्रत्यायनद्वारेण विधेययागस्य प्राशस्त्यं लक्षयन्ति। एवञ्च विध्यर्थवादयोर्वाक्यैक्यवाक्यता एव न तु पदैकवाक्यता वाक्ययोः पर्यवासितवाक्यार्थयोर्भेदात्। अत्रायं सङ्ग्रहश्लोकः–

**एकस्मिन् वाक्यमध्ये भवति पदगाता ह्येकता नैव भेदो,**
**नो चेन्नञ्युक्तवाक्याद्विधिरिति जनहिंसा च वाक्यप्रमेया।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जाते वाक्यार्थबोधे पुनरिह विधिवाक्ये च सिद्धार्थवादे
प्रोक्तैक्यं वाक्यनिष्ठं फलति विविधता यार्थवादेषु लब्धा॥

श्रीमाधवाचार्यैरत्र विध्यर्थवादयोर्वाक्यैकवाक्यता स्वीकृता। वेदान्ते भामतीकारैः देवताधिकरणे विध्यर्थवादयोर्वाक्यैकवाक्यतामाश्रित्य मन्त्रवर्णैः देवतानां यथा सिद्धिर्भवति तथा विस्तरेण प्रदर्शितम्। अन्यैः मीमांसकैर्मतमिदं निरस्तम्। तद्यथा कुतूहलवृत्तौ वासुदेवदीक्षिता केचित्तु अङ्गप्रधान विध्युद्देशानामिव विधायकलिङादिभेदात्स्वार्थनिराकाङ्क्षतया प्रयोजनवशेन सम्बन्धाद्वाक्यैक-वाक्यतेत्याहुरिति। भाट्टदीपिकाटीकायां शम्भुभट्टाश्च–एतेन अधिकरण-मालादिष्वर्थवादविध्योर्वाक्यैककवाक्यतोक्तिः–अपास्तेति निरूपयन्ति। तेषामयमाशयः-अक्ताधिकरणे स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते। इति भट्टाचार्यैर्वाक्यैकवाक्यताया लक्षणमुक्तम्। अनेनेदं ज्ञायते यत्र हि द्वयोर्वाक्ययोः स्वस्ववाक्यार्थबोधे प्रत्येकं पर्यवसन्नयोः पश्चादाकाङ्क्षावशेनान्वयस्तत्र वाक्यैकवाक्यता। यथोक्तम् "समिधो यजति" इत्याद्यङ्गवाक्यानि, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति प्रधानवाक्यमत्राङ्गप्रधानवाक्ययोवक्यैकवाक्यता। समिधो यजतीत्यादीन्यङ्गवाक्यानि स्वस्ववाक्यार्थभूतसमिधादियागविधानेपर्यवसन्नानि। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति प्रधानवाक्यञ्च स्वावाक्यार्थ-भूतदर्शपूर्णमासाभिधेयाग्नेयादिषड्यागानां विधानेन पर्यवसन्नम्। अत्र "फलवत्सन्निधावफलं तदङ्गम् इति न्यायेन दर्शपूणमासाभिधेयाग्नेयादीनां प्रधानयागत्वम्, समिधादियागानाञ्चाङ्गत्वमिति निश्चिते उभयोर्वाक्ययो-र्वाक्यैकवाक्यतया महावाक्यार्थबोधः समिधादियागसहकृतदर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति भवति। द्वयोर्वाक्योः स्वस्ववाक्यार्थबोधे प्रत्येकं पर्यवसन्नयोः पश्चादाकाङ्क्षावशेनान्वयस्तत्र वाक्यैकवाक्यतेति लक्षणमत्र सङ्गच्छते। विध्यर्थवादयोर्विषये नेयं स्थितिः। यतोऽत्र यत्परः शब्दस्स शब्दार्थः" इति न्यायेन विषय भुङ्क्ष्व" इति वाक्ये भोजननिषेधपरे विषपदार्थ-भोजनविधिपदार्थयोः परस्परान्वयबोधे सत्यपि भोजनविधिः वाक्यार्थ इति न स्वीक्रियते यथा तथार्थवादवाक्ये वायुर्वै क्षेपिष्ठा देवता" इत्यत्र पदानामन्वयबोधे सत्यपि वायुः शीघ्रगामी देवतेति बोधे वाक्यार्थ इति न

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वीक्रियते। किन्तु यथा विषं भुङ्क्ष्वेति वाक्ये वाक्यार्थस्य पर्यवसानं शुत्रगृहभोजननिषेधे एव भवति तथार्थवादवाक्येऽपि वयुदेवताकोऽयं यागः प्रशस्तः कर्तव्य इति विध्येकवाक्यतायामेव वाक्यार्थस्य पर्यवसानम्। एवञ्चार्थवादवाक्ये क्षेपिष्ठत्वादि संसर्गबोधेसत्यपि तत्र तात्पर्यं नास्ति, तस्य लाक्षणिकप्राशस्त्यबोधोपायमात्रत्वेन तात्पर्याविषयत्वात्। यत्तु तात्पर्यविषयीभूतं रुचिविषयत्वयोग्यतारूपं प्राशस्त्यम् तस्य प्रशस्तत्वादित्येवं लक्षणया पदार्थविधयैव भानम्। अर्थवादस्थले विध्येकवाक्यतां विना वाक्यार्थबोधस्य पर्यवसानाभावाद् यत्र हि द्वयोर्वाक्ययोः स्वस्ववाक्यार्थबोधे प्रत्येकं पर्यवसन्नयोः पश्चादाकाङ्क्षावशेनान्वयस्तत्र वाक्यैकवाक्यतेति लक्षणं न सङ्गच्छते। अन्यथा यत्परः शब्दः स शब्दार्थ इति न्यायविरोधः स्यात्। तेन सैन्धवमानये" त्यादौ प्रकरणाद्यननुरोधेन लवणमानय अश्वमानय इति द्विधा वाक्यार्थबोध इति वाक्यार्थनिश्चय एव दुष्करः स्यात्। तथा चार्थवादवाक्ये प्रत्येकं पदं प्राशस्त्यं न लक्षयति किन्तु कृत्स्नं वाक्यं प्राशस्त्यं लक्षयतीति सम्पूर्णवाक्यात्पदार्थस्यैव बोधः अतः विध्यर्थवादयोः पदैकवाक्यतैव। चौदनालक्षणोऽर्थो धर्मः" इति धर्मस्य चोदनैकवेद्यत्वस्य स्वीकारात् वेदस्य धर्माधर्मयोः प्रतिपादन एव तात्पर्यस्य स्वीकाराच्च अर्थवादवाक्येऽवान्तरवाक्यार्थबोधस्तेन च सिद्धार्थस्य सिद्धिरिति प्रतिपादनस्य पूर्वतन्त्रेऽनपेक्षितत्वाद् विध्यर्थवादयोः पदैकवाक्यतापक्ष एव पूर्वतन्त्रेऽत्र युक्त इति वस्तुस्थितिः। अत्रायं सङ्ग्रहश्लोकः—

एकत्वं विधिवादयोर्भवति चेत्तत्स्यात्पदैक्यं सदा।
मीमांसासमये पुनः श्रुतिशिरोवादे च वाक्यैक्यता।
मन्त्रार्णैः स्थिरदेवताधिगमनं तेनैव तेषां मते।
कर्मात्या स हि देव इत्यभिहितं श्रीजैमिनीयैर्बुधैः॥

मिश्रा वेदान्तविज्ञा इह परिजगृहे वाक्ययोरेकभावम्।
तस्मात्श्रीमाधवार्यैस्तदनु बहुविधैर्हेतुभिः साधितन्तत्॥

यद्यप्येवं तथापि श्रुतिनयधिषणा एकतां शब्दनिष्ठां।
युक्त्या सिद्धां वदन्ति स्थितविधिमितेरेव मानत्वसिद्ध्यै॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवञ्चार्थवादानां विध्येकवाक्यतया धर्मे प्रामाण्यमिति सिद्धम्। अयमत्र विवेकः-विधौ प्रवर्तकत्वशक्तिरस्ति प्ररोचकत्वशक्तिर्नास्ति, अर्थवादे च प्ररोचकत्वशक्तिरस्ति प्रवर्तकत्वं नास्ति। लोके च इयं गौः क्रेतव्या एषा बहुक्षीरेति प्रवर्तकत्वप्ररोचकत्वाभ्यामेव प्रवृत्तिर्झटिति भवति। यत्र तु अर्थवादो न दृश्यते तत्र विधिरेव प्रवर्तयतीति प्ररोचकत्वशक्तिरपि कल्प्यते। वेदेऽपि लौकिकदृष्टान्तेन पङ्ग्वन्धन्यायेन विध्यर्थवादयोरेकवाक्यतया प्रवर्तकत्वप्ररोकत्वशक्तीभ्यां यागादौ प्रवृत्तिरुत्पाद्यते।" वसन्ताय कपिञ्जलानालभते" इत्याद्यर्थवादरहितविधिषु अगत्या विधैरैव प्रवर्तकत्वप्ररोचकत्वेति शक्तिद्वयं कल्प्यते। सर्वथापि अर्थवादानां विध्येकवाक्यतया धर्मे प्रामाण्यमस्त्येवेति सिद्धम्।

द्वितीयमधिकरणं निरूप्यते-"ऊर्जोवरुद्ध्य" इति। तत्पूर्वं श्रीमाधवाचार्यैः प्रथमाधिकरणं गुरुमतरीत्या प्रदर्शितम् तदित्थम्

**जैमिनीयन्यायमाला**

**वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत्।**
**सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ।।4।।**

**प्रकाशिका**

विधेः वादोक्तहेत्वपेक्षत्वात् = अर्थवादोक्तहेत्वपेक्षत्वान् न मानतेति चेत् स्तुतिद्वारार्थवादानामन्वये सति नापेक्षेति = विधेः निरपेक्षत्वे बाधकाभावान्न दोषः, विधिर्निरपेक्षं प्रमाणमेवेति गुरुः = प्रभाकरः जगौ।

अयमाशयः-"अथातो धर्मजिज्ञासा इति जिज्ञासासूत्रे वेदाध्ययनान्नरं वेदार्थविचारः कर्तव्यतया प्रतिज्ञात इति गुरुमते स्थितिः। तदनु द्वितीये सूत्रे स च वेदार्थः चोदनालक्षणः विध्येकगम्य यागादिरूपः, विधिश्च तत्र निरपेक्षं प्रमाणमिति प्रतिपादितम्। आपादसमाप्तिं यावद् विधेः, निरपेक्षं प्रामाण्यं युक्तिभिस्साधितम्। सम्प्रति द्वितीयपादे यस्य वाक्यस्य साक्षात् कार्येऽर्थेऽन्वयो नावगम्यते तस्य कथं प्रामाण्यमिति विचार्यते। अत्रायं पूर्वपक्षः-"वायव्यं श्वेतमालभेत" इत्यत्र कार्यार्थता गम्यते, "वायुर्वै क्षेपिष्ठा" इत्यत्र तु अकार्यात्मकोऽर्थः प्रतीयते। अनयोः कः सम्बन्ध इति विचारे

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मलिनः स्नायादित्यादौ स्नानादिकार्ये मालिन्यादेः हेतुत्वेनावगतेः अकार्यार्थानां कार्यार्थं प्रति हेतुतावगम्यते। प्रकारान्तरेण सम्बन्धानवगमात् चोदनार्थकार्ये-ऽर्थवादानां हेतुत्वेनान्वयो वक्तव्यः। तथाच वायव्यं श्वेतमालभेत इति विधिवाक्यस्य यतो वायुः क्षिप्रमेव फलप्रदः अतः वायुदेवताको यागः कर्तव्य इत्यर्थवादोक्त हेतोरपेक्षितत्वाद्विधेः सापेक्षता सिद्ध्यति। औत्पत्तिकसूत्रे च "तत्प्रमाणं बादरायणस्यानपेक्षत्वाद् इति विधेरनयेक्षत्त्वं यत् साधितं तन्न सिद्ध्यति। अतः अर्थवादमुखेन कृत्स्नवेदस्यैवाप्रामाण्यं भवतीति। सिद्धान्तस्तु यतो वायुः क्षिप्रफलप्रदः अतः तद्देवताको यागः कर्तव्य इति विध्यर्थवादयोः हेतुहेतुमद्भावसम्बन्धो नास्ति अपि तु "रक्तः पटो भवती"त्यादौ यथा रक्तपदेनैव सहान्वयः पटो भवतीत्यस्य न पृथक् तथैव अर्थवादवाक्यस्य विधेयप्राशस्त्यद्वारा विध्येकवाक्यतया विधिवाक्येन सहैवान्वयो भवति न पृथगन्वयबोधः। अतः विधेः सापेक्षता नास्ति, प्रथमपादे प्रतिपादितं विधेः निरपेक्षं प्रामाण्यं सुस्थितं भवति। एवञ्च सार्थवादस्य विधिवाक्यस्यैव प्रामाण्यमस्मिन् पादे व्यवस्थाप्यते इति प्राभाकरमते विशेषः।

इदानीं भाट्टमतेन द्वितीयाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**ऊर्जोऽवरुद्ध्या इत्येष विधिवन्निगदो न किम्।**
**यूपौडुम्बरतां स्तौति स्तौति वा तद्विधित्सया॥5॥**

## प्रकाशिका

"औडुम्बरो यूपो भवति ऊर्ग्वा, उडुम्बर ऊर्क पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरूद्ध्या" इत्येष मन्त्रः तद्विधित्सया = यूपे औडुम्बरत्वस्य विधित्सया, यूपौडुम्बतां यूपस्यौडुम्बरत्वं किं न् स्तौति उत स्तौतीति संशयः। अत्र पूर्वपक्षः–

## जैमिनीयन्यायमाला

**चतुर्थ्या फलतालाभाद् यूपौडुम्बरताफलम्।**
**उर्जोवरोधं कथयन् कथं स्तुतिपरो भवेत्॥6॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

"ऊर्जोऽवरुद्ध्यै इत्यत्र अवरुद्ध्यै इत्यत्र चतुर्थ्या ऊर्जोवरोधं ऊर्ज: प्राप्तिं पशुप्राप्तिमित्यर्थं यूपौडुम्बरताफलम् = यूपस्य औडुम्बरताया: फलमिति कथयन् मन्त्र: कथं स्तुतिपरो भवेत् स्तुतिमात्रपरो न भवेत् अपि तु फलाय गुणविधायक इति भाव:।

पूर्वपक्षस्यायमाशय:–"औडुम्बरो यूपो भवती" ति वाक्यं यागीययूप: औदुम्बरकाष्ठनिर्मितो भवेत् इति विधानं करोति। 'ऊर्ग्वा उडुम्बर उर्क पशव: ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुद्ध्यै वाक्यशेषस्तु अवरुद्ध्यै' सम्पादनाय इत्यत्र चतुर्थीविभक्तिघटितांवरुद्धिपदेन ऊर्ज: अर्थात् पशूनां सम्पादनं फलमिति प्रतिपादयति। धनलाभाय राजसेवेत्यादौ चतुर्थ्या: फलपरत्वमवगम्यते। अत्र फलश्रवणात् एतत्फलं पशुसम्पादनमुद्दिश्य यूपस्यौदुम्बरत्वं विधीयते यथा स्वर्गकामो यजेतेत्यत्र स्वर्गमुद्दिश्य यागो विधीयते इति फलाय गुणविधि: प्रकृतस्थले, यत्र तु फलप्रतिपादकत्वं नास्ति "वायुर्वै क्षेपिष्ठा देवता इत्यादौ विधेयस्तुतिमेव बोधयतीनि अर्थवादवाक्यत्वं तत्र स्वीक्रियते। एवं पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते–

## जैमिनीयन्यायमाला

**अस्तुतौडुम्बरत्वस्याविधानात् कस्य तत्फलम्।**
**अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव स:।।7।।**

## प्रकाशिका

अस्तुतौ ='ऊर्ग् वा उदुम्बर" इत्यादिवाक्यशेषेण यूपे औदुम्बरत्वस्य स्तुत्यभावे "औडुम्बरो यूपो भवती" त्यत्र अविधानाद् यूपे औडुम्बरत्वस्य विधानाभावात् कस्य =कस्य विधे: तत्फलम् ऊर्ज: अवरोध: फलं स्यात्। न कस्यापि विधे: फलं स्यात् विध्यभावादिति भाव:। अर्थद्वैधे वाक्यभेद: =ऊगर्वा उडुम्बर" इत्येकस्य वाक्यस्य स्तुतिपरत्वं फलपरत्वञ्चेति द्विधा अर्थकरणे वाक्यभेद: स्यात्। तेन स्तावक एव स: = अत ऊर्ग्वा इत्यादिना स्तुतिरेव क्रियते इत्यर्थ:।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयमाशय—"औदुम्बरो यूपो भवति" इति वाक्ये भवतीति लट्प्रत्ययान्तं पदमस्ति न तु लिङादिविधिप्रत्ययान्तं पदम्। अतः यूप औदुम्बरत्वविधानं यूप औदुम्बरकाष्ठनिर्मितो भवेत् इति केन वाक्येन विधीयत इति विचारणीयम्। वाक्यान्ताराभावादस्मिन्नेव वाक्ये भवतीत्यत्र विधिः कल्पनीयः। विधेः कल्पनार्थं "ऊर्ग्वा उदुम्बर" इत्यादिवाक्यशेषे उदुम्बरस्य स्तुतिः स्वीकार्या। तदैवौदुम्बरस्य वाक्यशेषे स्तुतेः सत्वाद्वाक्यशेषाधिकरणन्यायेन औदुम्बरो यूपो भवतीत्यत्र यूपे औदुम्बरत्वं विधीयत इति वक्तुं शक्यते। अतः अत्र फलय गुणविधिर्नास्ति अपितु औदुम्बरो यूपो भवति" इति विधेः "ऊर्ग्वा उदुम्बर" इत्यादि वाक्यशेषेण स्तुतिः क्रियत इति ज्ञायते। पूर्वपक्षे तु एकस्मिन्नेव विधौ प्रेरकत्वं प्ररोचकत्वमिति शक्तिद्वयं कल्पनीयम्, सिद्धान्ते तु शक्तिरेकैव कल्पनीयेति लाघवम्। पूर्वाधिकरणे समान्यतः अर्थवादानामानर्थक्यनिरासेन स्तुतिलक्षणया विध्येकवाक्यतया प्रामाण्यं साधितमत्र विधिप्रतियोगिनामर्थवादानां विचारः प्रस्तुत इति भेदः।

अस्मिन्नधिकरणे गुरुमतं निरूप्यते—

## जैमिनीयन्यायमाला

**आप्नोतीति विधित्वस्य वादत्वस्याप्यनिर्णयात्।**
**न प्रमा चोदनेत्येतन्न वादो ह्येकवाक्यतः।।8।।**

## प्रकाशिका

आप्नोतीति = ऊर्जं पशूनाप्नोतीत्यत्र विधित्वस्य वादत्वस्य = अर्थवादत्वस्यानिर्णयात् चोदना न प्रमेति पूर्वपक्षे प्राप्ते ह्येकवाक्याः औदुम्बरो यूपो भवति "ऊर्जं पशूनाप्नोती" त्यनयोरेकवाक्यतः ऊर्जं पशूना-प्नोतीत्ययमर्थवाद एवेति चोदनायाः प्रामाण्यं सुस्थितमिति सिद्धान्तिम्।

अयमाशयः—प्राभाकरमते "चोदनालक्षणोऽर्थो धर्म" इत्यत्र कार्यार्थे एव वेदस्य तात्पर्यमिति निर्णीतम्। "औदुम्बरो यूपो भवति ऊर्ग्वा उदुम्बरः ऊर्क्पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै' इत्येकं वाक्यं प्रतीयते। कार्यञ्च द्वयम्—औदुम्बरो यूपोभवतीत्यत्र एका कार्यावगतिः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

औदुम्बरयूपविधानम्, ऊर्जं पशूनाप्नोतीत्यत्र उदुम्बरेण ऊर्जः सम्पादनं कार्यमिति एका कार्यावगतिः इति। अतः एकस्माद्वाक्यात् कार्यद्वयं प्रतीयते चेत् वाक्यभेदः स्यात्। अतः सन्दिग्धार्थकत्वात् कृत्स्नः वेद एवाप्रमाणमिति पूर्वपक्षः। सिद्धान्तस्तु अत्र कार्यद्वयस्य प्रतीतिर्नास्ति, किन्तु, औदुम्बरो यूपो भवतीत्यत्रैकैव कार्यावगतिः, अन्यश्च सिद्धोऽर्थः सिद्धसाध्ययोरेकवाक्यता। "ऊर्ग्वा उदुम्बर "इत्यादीनां स्तुत्यर्थेनान्वयः। अतः एतादृशस्थलेषु सिद्धसाध्ययोरेकवाक्यतयैककार्यावगतेः वेदवाक्यार्थे संशयाभावाद्वेदः कृत्स्नः प्रमाणमेव। तृतीयमधिकरणं निरूप्यते–

### जैमिनीयन्यायमाला

**तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः।**
**हिना श्रुता हेतुतातः शूर्पमन्यच्च साधनम्॥9॥**

### प्रकाशिका

तेन ह्यन्नमिति प्रोक्तः = शूर्पेण जुहोति तेन ह्यन्नं क्रियते इत्यत्र तेन ह्यन्नं क्रियते" इति वादः वाक्यभागः हेतुः = कारणताबोधकः उत स्तुतिः इति सन्देहः। हिना = तेन ह्यन्नं क्रियते" इत्यत्र हि शब्देन श्रुता हेतुता अतः शूर्पमन्यच्च साधनम् = यद् यदन्नसाधनं तत् तत् होमसाधनं भवति = तेन तेन होमं भावयेदिति पूर्वपक्षः। अयमाशयः–पूर्वाधिकरणे विधिप्रतियोगिनः अर्थवादाः विचारिताः अत्र हेतुप्रतियोगिनश्चार्थवादाः विचार्यन्ते। "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" इदं विषयवाक्यम्। "शूर्पेण जुहोति इत्यत्र शूर्पेण होमं भावयेदिति विधिः प्रतीयत इत्यत्र न संशयः। तेन ह्यन्नं क्रियते इत्यत्र तु किं शूर्पेण होमे कर्तव्येऽन्नकरणता हेतुत्वेन प्रतिपाद्यते उत अन्नकरणतादिगुणविशिष्टः शूर्पः प्रशस्तस्तेन होमः कर्तव्यः इति स्तुतिः क्रियते इति संशये पूर्वपक्षस्तावत् तेन ह्यन्नं क्रियते" इत्यत्र हिशब्दः कारणतावाचकः अतः हेतुता श्रौती, स्तुतिस्तु लक्षणया भवति, श्रौते सम्भवति लक्षणा अन्याय्येति न्यायेन श्रोतार्थ एव ग्राह्यं श्रौतश्चार्थः शूर्पेण होमं भावयेद्यतः शूर्पः अन्नस्य साधनमिति। ततश्च हेतुना व्याप्तिर्ज्ञायते यथा वह्निमान् धूमादित्यत्र धूमस्य हेतुत्वे निश्चिते यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिर्निश्चीयते तथात्रापि अन्नसाधनत्वेन शूर्पस्य होमसाधनत्वे प्रतिपाद्यमाने यद यदन्नसाधनं दर्वीपिठरादिकं तेन तेन होतव्यामिति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दर्वीपिठरादीनामपि होमसाधनत्वमत्र प्रतिपिपादयिषितमिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते—

## जैमिनीयन्यायमाला

**शूर्पसाधनता श्रौती नाश्रौते सा विकल्प्यते।**
**अतो निरर्थको हेतुः स्तुतिस्तस्मात् प्रवर्तिका॥10॥**

## प्रकाशिका

शूर्पसाधनता श्रौती = शूर्पेण जुहोतीत्यत्र तृतीयया शूर्पस्य होमसाधनत्वं यज्ज्ञायते तत् श्रुतिप्रमाणसिद्धम्, अश्रौते = तेन ह्यन्नं क्रियते इत्यत्र कारणतावाचकहिशब्दबलाद् दर्वीपिठरादीनां होमसाधनत्वं कल्प्यमानं न श्रौतम् अतः तैः साधनैः सा = शूर्पे होमसाधनता न विकल्प्यते विकल्परूपेण स्वीकर्तुं न शक्यते। अतः तेन ह्यन्नं क्रियते इति हेतुः कारणताप्रतिपादनं, निरर्थकः =व्यर्थम्, तस्मात् स्तुतिः = शूर्पस्यान्नसाधनत्वेन प्राशस्त्यबोधः, प्रवर्तिका =शूर्पेण होमः कर्तव्य इति विधेः प्ररोचकतया प्रवर्तकः।

अयमाशयः—"शूर्पेण जुहोती" त्यत्र शूर्पपदे तृतीयाविभक्तिः पद श्रूत्या शूर्पस्य होमसाधनत्वं साक्षात् प्रतिपादयति। तेन ह्यन्नं क्रियत "इत्यत्र तु हिशब्दबलात् अन्नसाधनत्वं हेतुत्वेनोपस्थाप्यते इति स्वीक्रियते चेत् हेतुव्यपदेशबलात्फलतः व्याप्त्या दर्वीपिठरादीनां होमसाधनत्वं वक्तव्यं लिङ्गात्। तत्र श्रुतिगम्यस्य शूर्पकरणत्वस्य लिङ्गगम्यानि दर्वीपिठरादिसाधनानि विकल्पतां नार्हन्ति, तुल्यबलयोर्विकल्प इति न्यायात्। अतः "तेन ह्यन्नं क्रियते" इत्यत्र हेतूपस्थापनं व्यर्थम्। विधेः हेत्वपेक्षायाञ्च श्रुतेर्नैरपेक्ष्य-भङ्गश्च। तथाच स्तुतिरेवात्र क्रियते, अत्र साधनत्वादिगुणविशिष्टः शूर्पः प्रशस्तः तेन होतव्यम्, इति। अत्र यद्यपि शूर्पेण साक्षादन्नं न क्रियते तेनेत्यत्र करणतृतीया न भवति तण्डुलाधिश्रयणादेरेवान्नकरणत्वम्, नपि हेतुतृतीया वैतुष्योत्पत्यनन्तरं नेष्टेऽपि शूर्पेऽन्नोत्पत्तेः सम्भावात् कुलालतात-वदन्यथासिद्धत्वात्शूर्पस्येहान्नं प्रति करणत्वेन हेतुत्वेन वा स्तुतिर्न भवति इति भाति तथापि गौणमन्नकरणत्वमत्र तृतीयार्थः इति गौणमन्नकरणलाभादियं स्तुतिः सम्भवत्येव। यथा लोके बलवानयं देवदत्तो यज्ञदत्तादीन् प्रसहत

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यादावतिशायने मतुबन्तो बलवच्छब्दः प्रकृष्टबले सिंहशार्दूलगजादौ मुख्यो वर्तमानो यज्ञदत्तादीन्निकृष्टबलानपेक्ष्य देवदत्ते प्रयुज्यते तद्वदत्र उत्कृष्टमन्त्रकरण-मग्निसंयोगादिकमपेक्ष्य साधकतमत्वाभावेऽपि लाङ्गलादिकमपेक्ष्य प्रकृष्टमात्र-साधकत्वमवलम्ब्य तेनेति तृतीया स्तोतुं प्रयुज्यते। अत्र "शूर्पेण जुहोतीति विधिः, तेन ह्यन्नं क्रियत इति तु वाक्यशेष एव, अतः गौणार्थस्वीकारो न दोषाय। "न विधौ परः शब्दार्थः इति न्यायाद्विधावेव लक्षणा दुष्यति। किञ्च "तेन ह्यन्नं क्रियते" इत्यत्र क्रियत इति वर्तमानव्यपदेशोऽपि स्तुतिपक्षेऽवर्तमानाप्यत्र क्रिया वर्तमानेव लक्षणया प्ररोचनार्थमुच्यत इति सम्यक् सङ्गच्छते, नहि इयं गौः बहुक्षीरा आसीत् भविष्यति" इति भूते भाविनि च वृत्तान्ते तादृशी प्ररोचकता दृश्यते यादृशी इयं बहुक्षीरेति वार्तमानिके वृत्तान्ते दृश्यते अतः शूर्पस्य स्तुत्या शूर्पेण जुहोति इतिविधेर्विधेये प्रवृत्तिरुत्पाद्यत इति समीचीनम्।

एवं त्रिभिरधिकरणैरर्थवादानां स्तावकत्वेन प्रामाण्यमुपपाद्य चतुर्थं मन्त्राधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।**
**यागेषूत पुरोडाशप्रथनादेश्च भासकाः॥11॥**

**ब्राह्मणेनापि तद्भानान्मन्त्रा पुण्यैकहेतवः।**
**न तद्भानस्य दृष्टत्वाद् दृष्टं वरमदृष्टतः॥12॥**

## प्रकाशिका

उरु प्रथस्वेति मन्त्राः किमदृष्टैकहेतवः =अदृष्टमात्रप्रयोजना उत यागेषु पुरोडाशप्रथनादेश्च भासकाः इति संशये ब्राह्मणेनापि तद्भनान् = ब्राह्मणवाक्येनापि मन्त्रार्थप्रकाशनात् मन्त्राः पुण्यैकहेतवः = अदृष्टमात्रप्रयोजना इति पूर्वपक्षे प्राप्ते, न- एवं नास्ति, मन्त्राः दृष्टप्रयोजनाश्च तद्भानस्य दृष्टत्वाद् = अदृष्टार्थस्वीकारापेक्षया दृष्टार्थस्वीकारः वरमित्यर्थः।

अयमाशयः–पूर्वेष्वधिकरणेषु विधिसमभिव्याहृतार्थवादानां विधेः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्तावकत्वेन प्रामाण्यमुक्तम्। अत्र विध्यसमभिव्याहृतमन्त्राणां प्रामाण्यविचार: अवसरप्राप्त:। यद्यपि चोदनासूत्र एव सामान्यत: विध्यर्थवादमन्त्रनामधेयभेदेन चतुर्धा भिन्नानां वेदावयवानां प्रामाण्यं साधितमेव तथापि अर्थवादानां विधे: स्तावकत्वेन प्रयोजनवत्वे साधिते मन्त्राणां कथं प्रयोजनवत्त्वमिति विशये तद्विचारायेदमधिकरणं प्रवर्तते। अस्ति मन्त्र: "उरुप्रथस्वे" ति, अस्य सन्निधौ न किमपि विधिवाक्यं श्रूयते, अस्य प्रयोजनवत्त्वमस्तीति तु अध्ययनविधिना निरर्थकस्याध्ययनविधानानुपपत्त्या साधितमेव। किन्तत प्रयोजनमिति जिज्ञासायां मन्त्राणामुच्चारणमात्रेणादृष्टोत्पत्तिरेव प्रयोजनमुत स्वार्थ प्रकाशनमपि प्रयोजनमिति विशये पूर्वपक्षस्यायमाशय:–

मन्त्राणामर्था न विवक्षिता अर्थात् स्वार्थप्रकाशनाय मन्त्राणां प्रवृत्तिर्नास्ति, यत: उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयती-"ति ब्राह्मणवाक्यं मन्त्रस्य विनियोगं प्रतिपादयति। विनियोगो नामाङ्गस्याङ्गिना सह सम्बन्ध:, अर्थादयं मन्त्र: कस्मिन् कार्ये प्रयोक्तव्य: इति प्रतिपादनमिति। मन्त्राणामर्था विवक्षिताश्चेदेवं मन्त्रार्थस्य विधानं व्यर्थं स्यात्। अत: ब्राह्मणवाक्ये मन्त्राणां विनियोगदर्शनान् मन्त्रा: स्वार्थप्रकाशनाय न प्रवृत्ता अपि तु उच्चारणमात्रेणैवादृष्टं जनयन्तीति ज्ञायते, यथा नेत्रवान् पुरुष: परेण नीयते चेदयं नेत्राभ्यां न पश्यतीति ज्ञायते। अत: मन्त्रा नानुष्ठेयार्थप्रकाशका इति ज्ञायते।। "अग्निमीळे पुरोहितम्" इत्येवं मन्त्रवाक्यानां पदक्रमनियमादपि मन्त्रा अविवक्षितार्थका इति निश्चीयते, य: व्युत्क्रमेण पाठेऽप्यर्थप्रकाशनसम्भवात् क्रमनियमो निरर्थक: स्यात्। क्रमनियमसहकृतोच्चारणकं मन्त्रजन्यमर्थज्ञानमदृष्टायेति कल्पनापेक्षया तदुच्चारणस्यैवादृष्टार्थत्वकल्पनायां लाघवात्। एवञ्च मन्त्रा अविवक्षितार्थका इति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते–

**न तद्धानस्य दृष्टत्वाद्दृष्टं वरमदृष्टत:"** इति।

शब्दप्रमाणरूपत्वान्मन्त्रवाक्यानां तैरप्यर्थप्रकाशनं भवतीत्यवश्य-मभ्युपेयम्। अर्थप्रकाशनं मन्त्रैर्भवतीति चेत् तेषां विवक्षितार्थकत्वमेव युक्तं न त्वदृष्टार्थत्वम् दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्। यद्यपि मन्त्राणां विनियोग: ब्राह्मणवाक्येभ्य एवावगम्यते तथापि स्वभावत: सिद्धं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्त्राणामर्थप्रकाशनसामर्थ्यमपाकर्तुं न शक्यते। मन्त्रैरेव मन्त्रार्थः स्मर्तव्य इति नियमस्य सम्भवान्मन्त्राणां विवक्षितार्थत्वमेव युक्तम्। एवञ्च प्रयोगसमवेतार्थस्मृतिरेव सम्भवतां मन्त्राणां प्रयोजनम्, असम्भवतां हुम् फटादिमन्त्राणां तु प्रयोजनन्त्वदृष्टमेवेति युक्तम्।

सम्प्रति इदमधिकरणं मतान्तरेण निरूप्यते–

## जैमिनीयन्यायमाला

**मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने।**
**न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद्यतः॥13॥**

## प्रकाशिका

विनियोजने अनुष्ठेयपदार्थानामङ्गाङ्गिसम्बन्धरूपविनियोगनिरूपणे मन्त्रब्राह्मणयोः कलहोऽस्ति न वेति सन्देहे, न = कलहो नास्ति, यतः मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद् = मन्त्राणामर्थप्रकाशनसामर्थ्यरूपलिङ्गैः सिद्धस्यैवार्थस्य विधानं ब्राह्मणवाक्यैः क्रियत इत्यर्थः।

अयं भावः–उरु प्रथस्वे "त्यादिमन्त्राणां विवक्षितार्थत्वं स्वीक्रियते चेत् "उरुप्रथस्वेति पुरोडाशं प्रथयति "मन्त्रोक्तार्थस्य विधाकस्य ब्राह्मणवाक्यस्याविवक्षितार्थत्वं स्यात्। उक्तब्राह्मणवाक्यस्य विवक्षितार्थत्वं स्वीक्रियते चेन्मन्त्राणां विवक्षितार्थत्वं न स्यात्। अतः मन्त्रब्राह्मणयोः परस्परं व्याघाताद-प्रामाणम्। एवमेकस्य वेदभागस्य मन्त्रस्य ब्राह्मणस्य वाप्रामाण्ये समानन्यायेन कृत्स्नस्यैव वेदस्याप्रामाण्यमिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते "चोदनालक्षणोऽर्थो धर्म" इति द्वितीयसूत्रे कार्येऽर्थे वेदः प्रमाणमित्यभिहितम्। अनेन च समग्रस्यापि वेदस्य नियोगप्रतिपादकतया अर्थवत्ता सिद्धा। अतः मन्त्रभागस्यापि नियोगार्थतयार्थवत्त्वं, तच्च मन्त्राणां विवक्षितार्थत्वे एव सिद्ध्यति। अतः मन्त्रा विवक्षितार्थका इति स्वीकार्यम्। न च ब्राह्मणवाक्यानां तदर्थप्रतिपादकानां वैय्यर्थ्यापत्तिरिति वाक्यम् तदर्थप्रतिपादकवाक्यैः मन्त्रशक्तिनिरूपणेनैव विनियोगः प्रतिपाद्यत इति स्वीकारात्। एवञ्च मन्त्रलिङ्गादेव प्रथमं विनियोगः तदर्थबोधकं ब्राह्मणवाक्यमनुवादकमेव। ''य एवं विद्वान् पौणमासीं यजते "इत्यादौ प्राप्तार्थबोधकानामपि यथा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रामाण्यं तथा अनुवादकत्वेऽपि तेषां प्रामाणयं सिद्ध्यत्येव। किञ्च तदर्थशास्त्राणां केवलमनुवादकत्वमेवेति नास्ति अपि तु गुणविधानेनाप्यर्थवत्ता निश्चीयते। एवञ्च मन्त्रब्राह्मणयोः परस्परं व्याघातस्याभावात् मन्त्राणां विवक्षितार्थत्वेऽप्युभयोः प्रामाण्ये न कापि बाधेति व्युक्तम्।

नच मन्त्राणां विवक्षितार्थत्वे सिद्धे यथार्थवादाधिकरणे अर्थवादावगतमेव प्राशस्त्यं धर्मप्रवृत्त्युपयोगितयाभ्युदयकारि तथेहापि मन्त्रजन्यस्मृतिरेवाभ्युदय-कारिणीति स्वीक्रियते। इदञ्च मन्त्राधिकरणसिद्धान्तस्य प्रयोजनम्। अग्निहोत्रपदस्य नामत्वसिद्धिः आघारस्य कर्मनामत्वसिद्धिः बर्हिर्देवसदनं दामि" इत्यत्र बर्हिश्शब्देन मुख्यार्थे विनियोगः, "वैश्वदेव्यामिक्षेत्यत्र आमिक्षा पय एवेति वाजिनयागस्य प्रतिपत्तिकर्मत्वम्, यदग्रे तत्तदधिकरणेषु प्रतिपादयिष्यते तत्तत्सर्वं मन्त्राणां विवक्षितार्थसाधनस्य प्रयोजनमिति द्रष्टव्यम्।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## तृतीयः पादः

# प्रथमाधिकरणम्

### प्रकाशिका

प्रथमद्वितीयपादाभ्यां विध्यर्थवादमन्त्राणां धर्मे कथं प्रामाण्यमिति निरूपितम्। तत्रादौ चोदनासूत्रे धर्मे चोदनावाक्यस्य प्रामाण्यप्रतिज्ञामुखेन तच्छेषतया तन्मूलतया च प्रमाणानामर्थवादमन्त्रस्मृत्यादीनां प्रामाण्यमप्यर्थात् प्रतिज्ञातमित्यप्युक्तमेव। तत्र द्वितीयपादे मन्त्रार्थवादयोः कथं धर्मे प्रामाण्यमिति प्रामाण्यप्रकारे प्रदर्शिते सम्प्रति वेदावयवत्त्वेन प्रतिपन्नानां नामधेयानां कथं प्रामाण्यमिति प्रामाण्यप्रकारः प्रदर्शनीयः उत वेदमूलानां स्मृत्यादीनां प्रामाण्यप्रकारः प्रदर्शनीय इति विशये वेदावयवत्वेन यद्यपि नामधेयानामेव विचारो युक्तस्तथापि धर्मलक्षणाधिकरणे समग्रस्यैव वेदस्य तन्मूलानां स्मृत्याचारादीनां सामान्यतः प्रामाण्यं धर्म उक्तमेवेति क्रमशः तेषां प्रामाण्यं कथमिति विवेचनावसरे मन्त्रार्थवादयोः प्रामाण्यप्रकारे निरूपिते स्मृतिशिष्टाचारयोः विध्यर्थवादमन्त्रैकमूलतया नामधेयमूलत्वाभावात् विध्यर्थवादमन्त्रमूलत्वेन प्रमाणभाजां स्मृतिशिष्टाचारादीनामेव विचारस्याभ्यर्हित त्वात् तृतीयपादे स्मृतीनामाचाराणाञ्च प्रामाण्यप्रकारः प्रदर्श्यते। तत्राप्याचाराणाम पेक्षया स्मृतीनामभ्यर्हितत्वात्स्मृतीनामेव विचारः आदौ प्रसक्तः।

### जैमिनीयन्यायमाला

**अष्टकादिस्मृतेर्धर्मे न मात्वं मानताथवा।**
**निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता॥1॥**

### प्रकाशिका

अष्टकादिस्मृतेः = अष्टाकाः कर्तव्या इत्येवमष्टकाश्राद्धादिविधीनां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बोधिकानां स्मृतीनां धर्मे मात्वं = प्रामाण्यं न, अथवा मानता प्रामाण्यमस्ति न वेति संशयः। सा निर्मूलत्वान्न मानम् = सा स्मृतिः मूलाभावान्न प्रमाणम्, वेदार्थोक्तौ निरर्थता = वेदोक्तस्यैवार्थस्य स्मृतिः प्रतिपादयतीति निर्मूलत्वं नास्तीति चेन् निर्मूलत्वाभावेपि ज्ञातार्थबोधकत्वान्निरर्थिका भवेदिति पूर्वपक्षः।

अयमाशयः–"अष्टकाः कर्तव्याः" "गुरुरनुगन्तव्यः" तडागं च खनितव्यम्", "प्रपा प्रवर्तयितव्या," "शिखाकर्म कर्तव्यम्" इत्याद्यनुष्ठानानां विधायकानि वाक्यानि स्मृतिग्रन्थेषु निबद्धानि दृश्यन्ते। तानि किं धर्मत्वेन स्वीकर्तव्यान्युत न धर्मत्वेन स्वीकारार्हाणीति विशेषे पूर्वपक्ष एवं भवति। अष्टकाकर्तव्यादिविधीनां प्रामाण्यं किं स्वत उत वेदमूलतयेति विवेचनीयम् तत्र नाद्यः धर्मस्य चोदनैकवेद्यत्वात् पौरुषेयनिबन्धवेद्यत्वानुपपत्तेः। न द्वितीयः स्मृतीनां मूलभूतस्य वेदस्यानुपलम्भात्। न च प्रत्यक्षेणानुपलम्भेऽपि प्रमाणान्तरेण तदुपलम्भसम्भव इति वाच्यम्। तर्हि किन्तत् प्रमाणमिति विचार्यं भवति स्मृतिवचनेन श्रुतिवचनमनुमीयत इति वक्तुं न शक्यते हेत्वभावात् स्मृतित्वं यदि हेतुस्तर्हि शाक्यस्मृतीनामपि प्रामाण्यापत्तिः। न च वैदिकस्मृतित्वं हेतुः, स्मृतीनां प्रामाण्यस्यैवानिश्चयात् इयं वैदिकस्मृतिरियमवैदिकस्मृतिरिति विवेकासम्भवात् किञ्च वेदमूलतयैव वैदिकस्मृतिरियमिति वक्तव्यम् तच्च स्मृतेः मूलभूतस्य प्रत्यक्षवेदस्यानुपलम्भेऽशक्यम्। अत एवाक्षेपकाभावादर्थापत्त्यापि स्मृतिवचनस्य मूलभूतं श्रुतिवचनं ज्ञातुं न शक्यते। उपमानमदृष्टेऽदृष्टसदृशे वा न प्रवर्तत इति तेनापि स्मृतेः मूलभूतस्य वेदस्योपलम्भो न सम्भवति। एवञ्च स्मृतीनां वेदमूलत्वनिश्चयो न सम्भवतीति सिद्धम्। कथञ्चित् स्मृतीनां वेदमूलत्वं सम्भवति चेत् स्मृतेर्मूलभूतेन वेदवचनेनैव तदर्थनिश्चयस्य सम्भवात् स्मृतिप्रणयनं व्यर्थं स्यादनधिगतार्थबोधकत्वाभावात् स्मृतीनां प्रामाण्यमपि न सिद्ध्येत्। एवञ्च पौरुषेयनिबन्धात्मकस्मृतिग्रन्थस्य धर्मे प्रामाण्यं नास्तीति पूर्वपक्षे प्राप्ते सिद्धान्तो निरूप्यते–

**जैमिनीयन्यायमाला**

**वैदिकैः स्मर्यमाणत्वात्सम्भाव्या वेदमूलता।**
**विप्रकीर्णार्थसंक्षेपात् सार्थत्वादस्ति मानता।।2।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

वैदिकैः स्मर्यमाणत्वात्= अष्टकाः कर्तव्या इत्यादिस्मृतीनां वैदिकैः मन्वादिभिः स्मर्यमाणत्वात् वेदमूलता वेदमूलत्वं सम्भाव्या = अनुमेयम्, अतः मन्वादिभिः वैदिकैः प्रणीतानां स्मृतीनां वेदमूलत्वेत प्रामाण्यमिति भावः। विप्रकीर्णार्थसङ्क्षेपात् = प्रत्यक्षेषु परोक्षेषु नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र संक्षिप्यमाणत्वात् सार्थत्वात्= सप्रयोजनवत्त्वान् मानता = प्रामाण्यमस्ति इत्यर्थः। अयमाशयः = स्मृतीनां मन्वादिप्रणीतानां पौरुषेयत्वेन स्वतःप्रामाण्याभावेऽपि वेदमूलतया प्रामाण्यन्तु सिद्ध्यत्येव। स्मृतिवचनैर्मूलवेदवचनस्यानुमानेनोपस्थितेः सम्भवात्। अनुमानञ्चेत्थम् विमता स्मृतिः वेदमूला वैदिकमन्वादिप्राणीतस्मृतित्वादुपनयनाध्ययनादिस्मृतिवदिति। न चाप्रयोजकत्वं वाच्यम्, उपनयनविधायकवाक्यस्य वैदिकमन्वादिप्रणीतस्य वेदमूलत्वदर्शनाद्वैदिकमन्वादिप्रणीतवाक्यान्तरस्यापि वेदमूलत्वस्य युक्तत्वात्। न च ज्ञातज्ञापकत्वादप्रमाणमिति वाच्यम् नानावेदेषु विप्रकीर्णस्यैकत्र सङ्क्षेपेण कथनात् ज्ञातस्यैवाज्ञातवत्स्थितस्याज्ञातस्य वा ज्ञापकत्वात् प्रमाणं भवितुमर्हति। मन्त्रलिङ्गसिद्धार्थानुवादकब्राह्मणवाक्यानां विधायकत्वादिना यथा प्रामाण्यं प्रयोजनवत्त्वञ्च तथा वैदिकमन्वादिप्रणीतस्मृतीनामपि प्रामाण्यं प्रयोजनवत्वम्। न च ब्राह्मणवाक्यानां मन्त्राणाञ्च" तुल्यञ्च साम्प्रदायिकम्" इति न्यायेन नित्यतयापौरुषेयतया च प्रामाण्ये सिद्धे गुणवादादिना नियमादिना च प्रयोजनवत्त्वं सिद्ध्यति इह तु न तथेति वैषम्यमिति वाच्यम्। वैदिकमन्वादिप्रणीतत्वेन स्मृतीनां प्रामाण्ये सिद्धे विप्रकीर्णार्थसङ्क्षिप्यमाणत्वरूपप्रयोजनवत्त्वं स्मृतीनां सिद्ध्यतीतीहापि समानम्। न च उपनयनाध्ययनादिस्व्मृतिवदिति दृष्टान्तेऽस्मदादिभिरवगम्यमानवेदमूलत्वेनैव हेतोः व्याप्तिग्रहात्साध्यधर्मविशेषसाधनाद्विरुद्धत्वमिति वाच्यम् अवधीरितप्रत्यक्षाप्रत्यक्षविशेषस्य वेदस्य मूलतया प्रामाण्यस्य दृष्टान्ते दर्शनात् मन्वादिप्रणीतवाक्यान्तरस्यापि वेदमूलत्वान् प्रामाण्यं सिद्ध्यतीति न दोषः। अन्यथा धूमवत्वादावपि तदेतद्देशनिष्ठत्वादि विकल्पेन विरोधादेर्दुष्परिहरत्वात्। शाक्यादीनाञ्च वेदनिन्दकानां स्मृतौ च वैदिकप्रणीतत्त्वहेतोरसत्वान्न वेदमूलतया प्रामाण्यम्। "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्" इति सूत्रञ्च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैदिकत्वसामान्यात् वैदिकमन्वादिप्रणीतत्वात् स्मृतीनां वेदमूलत्या प्रामाण्यमिति स्पष्टं प्रतिपादयति।

केचित्तु खण्डदेवादयस्तु स्मृतीनां प्रामाण्येऽर्थापत्तिं प्रामाणत्वेनोपन्यस्यन्ति। तथाहि यद्यपि स्मृतीनां मूलं किमपि स्पष्टं नोपलभ्यते तथापि सर्वैः शिष्टैस्ततः धर्मोऽवगम्यते इति स्वीक्रियते इति प्रत्यक्षम्। अतः स्मृतीनां मूलं किमिति विवेचनीयम् तदा अदृष्टं किमपि कल्प्यते चेत् दृष्टाविरुद्धलघुभूतमेव कल्पनीयम् इति वस्तुस्थितिमनुरुध्यैव कल्पनीयम्। यदि भ्रान्तिः स्मृतीनां मूलत्वेन कल्प्यते तदा अष्टकादिवाक्येभ्यो धर्मत्वावगतिर्दृश्यमाना विरुध्येत। सर्वाभ्युपेततत्प्रामाण्यबाधश्च। अद्यावधि मन्वादि भ्रान्तेरनुवृत्तिः मन्वादेश्च स्वग्रन्थग्राहिणः पुरुषान्प्रति स्वभ्रान्तिपरिहारोपन्यासः इत्यनेकदृष्टविरोधिनी चादृष्टकल्पना कार्या भवेत्। स्मृति वाक्यस्य मूलं विप्रलम्भ इति चेत् पूर्ववत् स्मृतिवाक्येभ्यो धर्मत्वावगति- र्विरुध्येत सर्वाभ्युपेतप्रामाण्यबाधश्चेति दोषद्वयम्। अन्यच्च विप्रलम्भः, तत्प्रयोजनम्, लोकस्य च तत्र भ्रान्तिः, तस्याश्चेयन्तं कालमनुवृत्तिः इत्यनेकादृष्टकल्पनम्। स्मृतीनां श्रुतिमूलत्वे न तु पूर्ववन्नादिमद्दोषद्वयम्। मन्वादीनां वैदिकत्वात् श्रुत्युपलम्भः सम्भाव्यते। अतः दृष्टसकलत्रैवर्णिकशिष्टपरिग्रहान्यथानुपपत्तिप्रसूतया दृष्टार्थापत्त्या श्रूतिमूलत्वमेव स्मृतीनां युक्तम्। न तु भ्रान्त्यादिमूलत्वम्। बौद्धादिप्रणीतस्मृतीनान्तु अवैदिककर्तृकत्वादेव श्रुतिमूलत्वं कल्पयितुं न शक्यते इति दोषः। एवमर्थापत्त्यैव स्मृतीनां प्रामाण्यमुपपादनीयम्। अनुमानेन स्मृतीनां प्रामाणयमुपपाद्यते चेत् प्रयोग एवं स्यात् मन्वादिस्मृतिः धर्मे प्रमाणम् वेदार्थानुष्ठातृभिरनुष्ठीयमानार्थत्वात् वेदवत्। स्मृतिवाक्यम् वेदमूलकम् वैदिकमन्वादिप्रणीत्वात् प्रत्यक्षवेदमूलकस्मृतिवाक्यवत् इति। तत्र प्रथमप्रयोगेऽपौरुषेयवाक्यत्वमुपाधिः, द्वितीये चास्मदादिभिरवगम्यमानवेदमूलेनैवहेतोः व्याप्तिग्रहात् साध्यधर्मविशेष- घसाधनाद्विरुद्धम्। अर्थकामानुसारिस्मृतिवाक्येषु व्यभिचारश्चेति दोषमुद्भावयन्ति। न्यायमाला विस्तरस्तु द्वितीयमनुमानमेव स्मृतीनां प्रामाण्ये दर्शयति। विमता स्मृतिर्वेदमूला वैदिकमन्वादिप्रणीतस्मृतित्वादुपनयनाध्ययनादिस्मृतिवदिति। न च दृष्टान्ते उपनयनाध्ययनादिस्मृतिवाक्येषु अस्मदादिभिरवगम्यमानवेदमूलत्वेनैव हेतोः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्याप्तिग्रहात् साध्यधर्मविशेषसाधनाद्विरुद्धमिति वाच्यम् अवधीरितास्मदादिभिरवगम्यमानानवगम्यमानताकविशेषस्य वेदमूलत्वस्य वैदिकमन्वादिप्रणीतस्मृतित्वहेतौ दृष्टान्ते व्याप्तिग्रहात् पक्षे तन्मात्रस्यैव साधनान्न विरोधः यथा पर्वतो वह्निमानित्यनुमाने दृष्टान्ते महानसे महानसीयवह्निधूमयोर्न व्याप्तिरपि तु वह्निधूमयोरेव व्याप्तिग्रहात् पक्षे पर्वते वह्निमात्रस्य साधनान्न विरोधः। न वार्थकामानुसारिस्मृतिवाक्येषु व्यभिचारः, "सर्वं वेदात् प्रसिद्ध्यति" इति स्मृतिकारैः स्वीकृतत्वात् अर्थकामानुसारिस्मृतिवाक्येष्वपि वेदमूलत्वस्यैव साधनात्तेषामपि पक्षसमत्वात् पक्षे पक्षसमे वा साध्यसन्देहस्य गुणत्वान्न दोषः। अतः विमतं स्मृतिवाक्यम् वेदमूलम् वैदिकमन्वादिप्रणीतत्वात् सम्प्रतिपन्नस्मृतिवाक्यवदित्यनुमानेनापि "अष्टकाः कर्तव्या" इत्यादिस्मृतिविहितानुष्ठानानां धर्मत्वं निश्चीयते। शास्त्रदीपिकापि" सम्भवति च त्रैवर्णिकानां वेदे संयोग इति तन्मूलत्वमेवाध्यवसीयते" इति, अष्टकादिस्मृतिर्वेदमूला वेदमूलकतया वैदिकैः परिगृहीतत्वात् प्रत्यक्षवेदमूलवदित्याद्यनुमानेनेति शेष इति मयूखमालिकाटीकापि स्मृतीनां विप्रतिपन्नस्मृतिवाक्यानां प्रामाण्येऽनुमानं प्रामाणतयोपन्यस्यति। सर्वथपि स्मृतिः धर्मे प्रमाणमिति सिद्धम्।

गुरुमतेनेदमधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**न मा स्मार्ताष्टकाङ्गत्वाद् यां जना इति मन्त्रगीः।**
**तत्र स्मृतेर्मूलवेदेऽनुमिते मात्वसम्भवात्॥3॥**

**प्रकाशिका**

"यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा" इति मन्त्रगीः =मन्त्रवाक्यं न मा = न प्रमाणम्, स्मार्ताष्टकाङ्गत्वात् = स्मृतौ प्रतिपादितस्याष्टकाख्यकर्मणोऽङ्गत्वात् इति पूर्वपक्षे प्राप्ते तन्न, स्मृतेर्मूलवेदेऽनुमिते मात्वसम्भावात्= स्मृतेर्मूलभूतस्य वेदस्यानुमिते तन्मूलतयार्थादनुमितवेदमूलतयाष्टकाख्यकर्मविषयकमन्त्रवाक्यस्य प्रामाण्य- सम्भवात् इति सिद्धान्तः।

अयं भावः–"अथातो धर्मजिज्ञासा" इति जिज्ञासाधिकरणे

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेदार्थविचारः कर्तव्यतया प्रतिज्ञातः, तत्र प्रथमपादे विधीनामेव वेदार्थत्वात् कार्यरूप एव वेदार्थ इति निरूपितम्। द्वितीये च पादे अर्थवादवाक्यसय विधेयप्राशस्त्यद्वारा विधिवाक्येन सहैवान्वय इति सार्थवादस्य विधेर्नैरपेक्ष्यं प्रामाण्यं व्यवस्थापितम्। अत्र च येषां सिद्धर्थबोधकानां वेदवाक्यानां प्रतिपाद्यानामष्टकाश्राद्धादीनामङ्गभूतानामङ्गिनां विधायकं वेदवाक्यं नोपलभ्यते किन्तु स्मृतिकारैस्तद्विधानं कृतमुपलभ्यते तेषां सिद्धार्थबोधकानां वेदवाक्यानां प्रामाण्याप्रामाण्यचिन्त प्रवर्तत इत्यध्यायसङ्गतिः। तेषां सिद्धार्थबोधकवेदवाक्यानां प्रत्यक्षविधिना सहैवान्वयासम्भवात् स्मृतीनाञ्च पौरुषेयतया तत्सापेक्षत्वस्या-युक्तत्वादप्रामाण्यमिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते स्मृत्या मूलभूतं वाक्यं वैदिकमनुमीयते। अतः "अष्टकाः कर्तव्या" इत्यनुमितवेदवाक्येन विहितस्याष्टकाश्राद्धस्य "यां जनाः प्रतिनन्दन्ति इति मन्त्रोऽङ्गभूत इति मन्त्रः प्रमाणमेव। एवञ्च नित्यानुमेयवेदमूलतया मन्वादिवैदिकप्रणीतस्मृतीनां प्रामाण्यमिति प्राभाकरमते विशेषो ज्ञायते।

द्वितीयमधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**औडुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः।**
**अमितिर्वेति सन्देहे मितिः स्यादष्टकादिवत्॥4॥**

## प्रकाशिका

"औदुम्बरी सर्वा वेष्टयिव्या" एषा स्मृतिः मितिः = प्रमाणम्, अमितिर्वेति= अप्रमाणं वेति सन्देहे मितिः स्यादष्टकादिवत् = यथा "अष्टकाः कर्तव्या" इत्यादिस्मृतेर्यथा प्रामाण्यं तथा अस्या अपि स्मृतेः प्रामाण्यं युक्तमिति पूर्वपक्षः।

अयमाशयः–पूर्वस्मिन्नधिकरणे स्मृतीनां श्रुतिमूलतया प्रामाण्यं प्रतिपादितम्। अत्र प्रत्यक्षश्रुतिविरोधे स्मृतीनां प्रामाण्यमस्ति न वेचि विचार्यते। यथा "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः औदुम्बर्या वेष्टनं विदधाति। श्रुतिश्च "औदुम्बरीं स्पृष्ट्वा उद्गायेत्" इति औदुम्बर्याः स्पर्शनं विदधाति। श्रुतेश्च प्रामाण्यमपौरुषेयतया विधिपादे साधितमेव। सर्ववेष्टनस्मृतिश्च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैदिकमन्वादिशिष्टपरिगृहीतत्वहेतुना प्रमाणं श्रुतिमूलतयेति पूर्वाधिकरणन्यायेन सिद्ध्यति। अन्यथा "अष्टकाः कर्तव्या" इति स्मतिः प्रमाणम् "औदुम्बरी सर्वा वेष्टयितत्या" इति स्मृतिर्न प्रमाणमित्यर्धवैशसापत्तिः। न चैकत्र प्रत्यक्षश्रुतिविरोधोऽन्यत्र नेति विशेष इति वाच्यम्। औदुम्बरीं स्पृष्ट्वा उद्गायेदिति प्रत्यक्षश्रुतिसत्वेऽपि वेष्टनस्मृत्या वैदिकशिष्टपरिगृहीतत्वहेतुना मूलश्रुत्यनुमाने बाधासम्भवात् औदुम्बर्याः स्पर्शनवेष्टनानुष्ठानयोः क्रियात्मकत्वात् प्रयोगभेदेनाविरोधोपपत्तेः विषयापहारलक्षणबाधासम्भवात्। अग्निरनुष्णः द्रव्यत्वात् इत्यस्य भूतवस्तुविषयकत्वात् धर्मिग्राहकप्रत्यक्षेण बाधो युक्तः प्रकृते स्पर्शनवेष्टनयोस्तु क्रियात्मकत्वात् "उदिते जुहोति" "अनुदिते जुहोति" "व्रीहिभिर्यजेत" यवैर्यजेत" इति उदितानुदितहोमादिविधीनामिव विकल्पेन प्रयोगस्सम्भवाद्बाधो युक्तः। अतः "औदुम्बरी सर्वा वेष्टयितव्या इति विधिः प्रत्यक्षश्रुतिविरुद्धोऽपि वैदिकशिष्टपरिगृहीतत्वेन धर्मे प्रमाणमिति पूर्वपक्षः।

सिद्धान्तोभिधीयते–

### जैमिनीयन्यायमाला

**औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः।**
**विरोधान्मूलवेदस्याननुमानान्न मानता॥5॥**

### प्रकाशिका

**औदुम्बरीं स्पृशन् गायेदिति**–औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षवेदतः =प्रत्यक्षश्रुत्या विरोधान् मूलवेदस्याननुमानात्= "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मतेर्मूलस्य वेदस्यानुमानासम्भवात् न मानता = अस्याः श्रुतेः प्रामाण्यं नास्तीत्यर्थः।

इदञ्च भाष्यकारमतेन समाधानम्। अयं भावः–"चोदनालक्षणोऽर्थो धर्म" इति सूत्रेण धर्मेऽपौरुषेयवेद एव प्रमाणमिति साधितम्। पूर्वाधिकरणे च स्मृतिः स्मृतित्वेन धर्मे न प्रमाणमपितु वैदिकमन्वादिप्रणीतत्वेन हेतुना स्मृतिमूलभूतस्य वेदवाक्यस्यानुमानं बोधयति, तच्च स्मृतिवाक्येनानुमितमपौरुषेयं वेदवाक्यं धर्मे प्रमाणमिति तद्द्वारा स्मृतेः प्रामाण्यं साधितम्। अनुमानञ्च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रमाणान्तरेणबाधे सति नोदेति इति लोके सिद्धम्। प्रमाणान्तरेणानुमानस्य बाधश्च द्विधा भुवितुमर्हति। एकस्तावत् प्रमेयापहाराद्यथा अग्निरनुष्णः द्रव्यत्वात् इति शैत्यानुमानस्याग्नावौष्ण्यप्रत्यक्षेण प्रमेयापहाराद् भवति। द्वितीयस्तु सिद्धसाधनस्थले प्रत्यक्षदृष्टे करिणि तदनुमानस्यानुमितिसामग्रीविघटनेन भवति। अत्र यद्यपि सर्ववेष्टनस्मृतेर्मूलं किमिति जिज्ञासा श्रुत्यनुमापिकेति प्रत्यक्षयापि स्पर्शनश्रुत्या सा जिज्ञासा न शाम्यतीति अनुमितिसामग्रीविघटनाभावाद् द्वितीयप्रकारेण बाधस्तु न भवति तथापि औदुम्बर्याः स्पर्शनविधायकेन श्रुतिवाक्येन सर्ववेष्टनविधायकश्रुतिवाक्यानुमानस्य प्रमेयापहारादेव बाधो भवति। न च शैत्यानुमानवैषम्यमुक्तमिति वाच्यम्; सिद्धविषयकत्वक्रियात्मकविषयकत्वादिभेदस्यात्राप्रयोजकत्वात्। स्मृत्या सर्ववेष्टन विषयिकया सर्ववेष्टनबोधकश्रुतिवाक्येऽनुमिते सति स्पर्शबोधकश्रुतिवाक्येन सह विरोधे प्रतीते तत्परिहाराय उदितानुदितहोमवत्प्रयोगभेदेन विकल्पादिकं वक्तव्यम्। किन्तु सर्ववेष्टनस्मृत्या तादृशश्रुतिवाक्यानुमानमेव न सम्भवति बाधदर्शनात्। उदितानुदितहोमबोधकवाक्ये तु प्रत्यक्षश्रुतिवाक्य इति शास्त्रप्राप्तस्य शास्त्रेणैव निषेधेऽगत्या व्यवस्थितविकल्पाश्रयणमिति प्रकृते तन्न युक्तम्। अन्योन्याश्रयश्च स्यात्। सर्वं वाक्यं सावधारणमिति न्यायेन "औदुम्बरीं स्पृष्ट्वोद्गायेदि" ति वाक्येन स्पर्शनमेव कार्यमिति विधिशक्त्या पाक्षिकमेव स्पर्शनं विधीयते। जाग्रति सति औदुम्बर्या अपाक्षिकस्पर्शनविधायके प्रत्यक्षश्रुतिवाक्ये सर्ववेष्टनस्मृत्या श्रुतिकल्पनं न सम्भवति। स्पर्शनस्य पाक्षिकत्वे सति सर्ववेष्टनस्मृत्यानुमानिकश्रुति वाक्यस्य कल्पना, आनुमानिकश्रुतिवाक्यस्य कल्पनायां सत्यां स्पर्शनश्रुतेः पाक्षिकस्पर्शविधायकत्वकल्पनेतीतरेतराश्रयता। अतः प्रत्यक्षश्रुतिविरोधस्थले स्मृतिवाक्यस्य मूलं श्रुतिवाक्यमिति न कल्प्यते किन्तु भ्रान्त्यादिकमेवेति स्वीक्रियते। न चाष्टकादिस्मृतिवाक्यानां मूलं श्रुतिवाक्यम्, सर्ववेष्टनादिस्मृतिवाक्यस्य मूलं भ्रान्त्यादिकमेवेत्यर्धवैशसापत्तिरिति वाचम्। अष्टकादिस्मृतीनां मूलं किमिति जिज्ञासायां वैदिकमन्वादिप्रणीतत्वात् प्रत्यक्षश्रुतिविरोधाभावाच्च श्रतिरेवेति तन्मूलं निश्चीयते, एतदुभयाभावस्थले स्मृतेर्मूलं श्रुतिवाक्यं न कल्प्यते, अत्र अस्मिन् विरोधाधिकरणे सूत्रद्वयम्–"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्"। "हेतुदर्शनाच्च इति प्रथमवर्णकानुसारेण स्वीक्रियते। अतः अत्र श्रुतिवरोधस्यैव वेष्टनादि–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मृत्यप्रामाण्ये मुख्यं हेतुत्वम्, लोभादिहेतुदर्शनस्य त्वन्वाचयहेतत्वमेवेति वैदिकमन्वादिप्रणीत्वप्रत्यक्षश्रुतिविरोधोभयाभावे स्मृतिमूलं श्रुतिवाक्यं न कल्प्यत इत्युक्तम्। वैसर्जनीयवस्त्रपरिग्रहविषये इदं प्रयोजकं न भवतीति विषयाव्याप्त्या वर्णकान्तरं प्रवृत्तमिति न दोषः। किन्तु भ्रान्त्यादिकमेव तत्र मूलमिति नयायमूलत्वादेतादृशमर्धवैशसं न दोषाय, अन्यथोत्सर्गापवादमात्रोच्छादापत्तिः। एवञ्च प्रत्यक्षश्रुतिवाक्यविरोधे स्मृत्या श्रुतेरनुमानमेव नोदेतीति तत्र स्मृतिमूलं भ्रान्त्यादिकमेवेति औदुम्बर्याः सर्ववेष्टनस्मृतिः न प्रमाणमिति भाष्यकारैः सिद्धान्तिम्। अत्र शास्त्रदीपिकामुखेन भाष्यकाराणामाशय उक्तः, तदुक्तं शास्त्रदीपिकायाम्– "अप्रामाण्यं विरुद्धानामशक्यार्थविधानतः। औदुम्बरीं न शक्नोति सर्वां वेष्टयितुं स्पृशन्।। वेष्टितां वापि संस्प्रष्टुमतोऽन्योन्यविरोधतः। प्रमेयापहृतेरेव बाधः स्यादग्निशैत्यवद्" इति। खण्डदेवास्तु शैत्यानुमितिस्थले सर्ववेष्टनश्रुत्यनुमितिस्थलेचोभयत्र जिज्ञासाविरहेणैवानुमित्यनुदय इति एकप्रकारक एव बाधः, सर्वत्र धूमादिदर्शनानन्तरं व्याप्त्यादिस्मरणे सत्यपि जिज्ञासाविरहेऽनुमित्यनुदयाद् अनुमितिज्ञानमात्रे जिज्ञसायाः कारणत्वं निश्चीयते। अतः प्रत्यक्षश्रुत्या औदुम्बर्याः स्पर्शे विहिते वेष्टनविषयजिज्ञासाया विरहेण सत्यपि स्मरणरूपेऽनुमापके लिङ्गे वेष्टनश्रुत्यनुमानं नोदेति अतः वेष्टनस्मृतेर्मूलं भ्रान्त्यादिकमेवेति तन्न प्रमाणमिति उपपादयन्ति। सर्वथापि भाष्यकाराणां मते प्रत्यक्षश्रुतिविरोधे स्मृत्या मूलश्रुतेरनुमानं नोदेति, अतः सा स्मृतिरप्रमाणमेवेति सिद्धान्तः। वार्तिककारमतेनेदमधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात्**
**अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते।।6।।**
**परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत्**
**अस्त्येवमननुष्ठानं स्वप्रत्यक्षानुरोधतः।।7।।**

## प्रकाशिका

प्रत्यक्षानुमितश्रुत्योः = औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिः औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृत्यानुमितश्रुतिः अनयोर्द्वयोः, व्याघातदर्शनत् = विरोधदर्शनात् अमात्वे शङ्किते = उभयोरप्रामाण्यमिति पूर्वपक्षिणा शङ्किते

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बाधोऽनुमानस्य स्मृत्या श्रुतेरनुमानस्यैव बाधोऽत्र वर्ण्यते इति सिद्धान्तः। वेष्टनस्य स्मृतेर्मूलं वेदवाक्यं परप्रत्यक्षमिति चेत् एवमपि= तथापि स्वप्रत्यक्षानुरोधतः, औदुम्बर्याः स्पर्शनस्यैवानुष्ठानमस्ति, अनुष्ठानं कार्यमित्यर्थः।

अयमाशयः–वार्तिककाराः अजिज्ञासोरपि मेघगर्जनेन वृष्ट्यनुमानोदयदर्शनात् औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिदर्शने सत्वेऽपि औदुम्बरी सर्वा वेष्टयितव्या इति स्मृत्या श्रुतेरनुमानं भवत्येवेति स्मृतेरप्रामाण्यं न युक्तम् तथापि स्वप्रत्यक्षात्सारेणैवानुष्ठानं कार्यमिति यावत् स्मृतिमूलश्रुतिर्नोपलभ्यते प्रत्यक्षतस्तावत् स्पर्शनमेवानुष्ठेयमिति फलतः तावद् अननुष्ठानलक्षणमप्रामाणण्यं प्रत्यक्षविरुद्धस्मृतिवाक्यस्येति प्रथमवर्णके निरूपयन्ति।

"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति" सूत्रेऽनुष्ठानपदाभावात् वेष्टनस्मृतिमूलस्य श्रुतिवाक्यस्य प्रत्यक्षोपलम्भं यावन्न भवति तावद्वेष्टनस्मृतिवाक्यस्य अननुष्ठानलक्षणमप्रामाण्यमिति सूत्रस्यान्यथाव्याख्यानेऽनुष्ठानपदाध्याहारगौरवं स्यादित्यस्वरसात् वर्णकान्तरमपि वार्तिककारैर्दर्शितम्। तदनुसारेणाधिकरणशरीरम्–शाक्यादिग्रन्थानामपि प्रत्यक्षश्रुतिविरोधेऽपि "अष्टका कर्तव्या" इत्यादिस्मृतीनामिव श्रुतिमूलतया प्रामाण्यमस्ति न वेति सन्देहे वेदानामानन्त्यात् शाक्यानामपि निबन्धानां मूलमपि मन्वाद्यदृष्टं वेदवाक्यमेव स्यादतः तन्मूलतया तेषामपि प्रामाण्यमितिपूर्वपक्षे वेदद्वेषिणां तेषां वेदमूलत्वासम्भवात् तन्मूलतया प्रामाण्यं न युक्तमिति सिद्धान्तिम्। हेतुदर्शनादित्यपि सूत्रमस्मिन् पक्षे सुतरां सङ्गच्छते, शाक्यादिभिः सर्वत्र स्वप्रतिपाद्यानि हेतुभिरेवोपन्यस्यन्ते, अतः हेतुमूलत्वात्तेषां वेदमूलत्वं नास्तीति, प्रत्यक्षश्रुतिविरोधे तेषां वेदमूलतया प्रामाण्यं न युक्तमिति। यद्यपि "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" "कारणाद् धर्ममन्विच्छेत्" इत्यादौ क्वचित् मन्वादिभिरपि हेतुभिरुपपादनं कृतमिव दृश्यते तथापि तत्र धर्मः तर्कमूल इति नोच्यते "वेद एव द्विजातीनां निःश्रेयसकरः परः" "सर्वं वेदात्प्रसिद्ध्यति" इति वेदमूल एव धर्म इति प्रतिज्ञात्वात्–वेदार्थस्यैवोपबृंहणाय निर्णयाय तर्काणां स्वीकारात् हेतुकानां शाक्यादीनां ग्रन्थाद्वैशिष्ट्यं स्पष्टम्। अत एव मन्वादिभिः शाक्यग्रन्थानां हेतुशास्त्रत्वं निन्द्यत्वञ्च दर्शिते–"हेतुकान्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बकवृत्तींश्च वाङ्मात्रेणापि नार्थयेत्" "या वेदबाह्या: स्मृतयो याश्च काश्चित् कुदृष्टय:। सर्वास्ता: निष्फला: प्रेत्य तमोनिष्ठा हि ता: स्मृता:" इति

एवञ्च प्रत्यक्षश्रुतिविरोधे शाक्यादिग्रन्थानां धर्मेऽप्रामाण्यमस्मिन्नधिकरणे निरूप्यते, प्रत्यक्षश्रुतिविरोधाभावेऽपि तेषां धर्मेऽप्रामाण्यं शिष्टाकोपाधिकरणे निरूप्यते इति वार्तिककाराणां वर्णकान्तरे विशेष:। श्रीमाधवाचार्यै: अस्मिन्नधिकरणे वार्तिककारणां वर्णकान्तरं न दर्शितम्। किन्तु शिष्टाकोपाधिकरणेऽग्रिम एव वर्णकस्यास्य विषयोऽपि प्रतिपादित:।

तृतीयमधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**वैसर्जनाख्यहोमीयवासोग्रहणसंस्मृति: ।**
**प्रमा नवा श्रुत्यबाधत् प्रमा स्यादष्टकादिवत्।।8।।**
**दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात्।**
**सर्ववेष्टनवद्बाधहीनाप्येषा न हि प्रमा।।9।।**

**प्रकाशिका**

वैसर्जनाख्यहोमीयवासो ग्रहणसंस्मृति: = वैसर्जनीयं वासोऽध्वर्यु: प्रतिगृह्णाति" इति स्मृति: प्रमा न वेति सन्देहे श्रुत्यबाधात् = प्रत्यक्षश्रुतिविरोधाभावात् "अष्टका:कर्तव्या" इति स्मृतिवत् प्रमा स्यादिति पूर्वपक्षे प्राप्ते दृष्टलोभैकमूलत्वसम्भवे = अस्या: स्मृतेर्मूलं वासस: लोभ एवेति कल्पनोपपत्ते: श्रुत्यकल्पनात् =अस्या: स्मृते: मूलं श्रुतिरिति न कल्पनोचितेति बाधहीनापि= प्रत्यक्षश्रुतिवरोधाभावेऽपि सर्ववेष्टनवद् एषा स्मृति: न प्रमा इति सिद्धान्त:।

अयमाशय:–इदञ्च भाष्यकारमतेन "हेतुदर्शनाद्" इति सूत्रं पृथगधिकरणरूपेण व्याख्यातं द्वितीयवर्णके। पूर्वस्मिन्नधिकरणे अष्टकादिस्मृतीनां वैदिक- मन्वादिप्रणीतत्वात् प्रत्यक्षुश्रुतिविरोधाभावाच्च श्रुतिमूलतया प्रामाण्यम्, सर्ववेष्टन स्मृतेश्च शिष्टप्रणीतत्वेऽपि प्रत्यक्षश्रुतिविरोधात् श्रुतिमूलतया प्रामाण्यं नास्त्यपि तु भ्रान्तिमूलतयाप्रामाण्यमेवेति वैशिष्ट्यमुक्तम् अत्र तु यत्र न श्रुतिविरोध: यथा "वैसर्जनहोमीयं वासोऽध्वर्यु: प्रतिगृह्णाति "यूपहस्तिनो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दानमाचरन्ति" इत्यादौ तत्रापि प्रामाण्यं स्मृतिवाक्यानां स्वीकार्यं न वेति अपवादसङ्गत्या विचार्यते। अग्निष्टोमसोमयागः पञ्चदिनसाध्यो यागः, तत्र चतुर्थे दिने अग्नीषोमीयपशुयागो विहितः। पशुतन्त्रस्यारम्भेऽवान्तरदीक्षा विसर्जनसम्बन्धी होमो वैसर्जनहोमाख्योऽनुष्ठेयः। तद्विषये श्रूयते-"अध्वर्युं यजमानोऽन्वारभते यजमानं पत्नी पत्नीमितरे पुत्रभ्रातरोऽहतेन वाससा सम्प्रच्छन्ना भवन्ति" इति। अत्रान्वारम्भो नाम स्पर्शः एवञ्च यजमानादयः परस्परमन्वारब्धाः क्रमशस्तिष्ठेयुः। तेषामुपरि बृहद्वासो धारयन्ति, तदधः क्रमेणेमे तिष्ठन्ति। वाससोऽन्ते स्रुदण्डमुपनिबध्यायं होमोऽनुष्ठीयते। तद्वाससो विषये श्रुतौ किमपि न श्रूयते। किन्तु स्मरन्ति स्मृतिकाराः-"वैसर्जनीयहोमीयं वासोऽध्वर्युः प्रतिगृह्णाती" ति। तत्किं प्रमाणं न वेति संशये पूर्वपक्षः-पूर्वाधिकरणन्यायेन प्रत्यक्षश्रुतिविरोधाभावे वैदिकशिष्टपरिगृहीतत्वेन हेतुना स्मृतेर्मूलश्रुतिवाक्यमनुमीयते, तेन च स्मृतिः श्रुतिद्वारा प्रमाणं भवतीति। एवं पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते "वैसर्जनीयं वासोऽध्वर्युः प्रतिगृह्णति इदं वाक्यं न प्रमाणम्, अध्वर्युपदघटितत्वेन कश्चन अध्वर्युः वस्त्रलोभेनेमां स्मृतिं प्रवर्तयामासेति लोभमूलत्वेन स्मृतेः प्रत्यक्षश्रुतिविरोधाभावेऽपि प्रामाण्यं न घटते। दृष्टानुसारिणी हि सर्वत्र कल्पनमति प्रकीर्णकतया पठ्यमानत्वेनास्याः स्मृतेर्लोभमूलकत्वकल्पनसम्भवेऽपि मन्वादिप्रणीताष्टकादिसहपठिततया दानादिस्मृतीनां न लोभादिमूलकत्वकल्पनावकाशः। एवञ्च यत्र प्रत्यक्षश्रुति-विरोधो नास्ति लोभादिमूलकत्वकल्पनाया अप्यवसरो नास्ति तत्र स्मृतेः वैदिकमन्वादिप्रणीतत्वेन श्रुतिकल्पनाद्वारा प्रामाण्यमन्यत्र तु स्मृतेः श्रुतिविरोधे दृष्टानुसारेण स्पष्टं लोभादिमूलकत्वकल्पनाया अवकाशे वैदिकशिष्ट-प्रणीतत्त्वाभावे वा मूलं श्रुतिरिति न कल्प्यते अपित लोभादिमूलकत्वे-नाप्रामाण्यमेवेति युक्तम्।

चतुर्थाधिकरणं निरूप्यते-

**जैमिनीयन्यायमाला**

**आचान्ते नेत्यमा मा वा स्मृतिरेषा न मा भवेत्।**
**वेदं कृत्वेति यः श्रौतः क्रमस्तेन विरोधतः॥10॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः।**
**धर्मस्य धर्म्यपेक्षत्वाद् अबाधादस्ति मानता॥11॥**

### प्रकाशिका

आचान्तेनेति स्मृतिरेषा = "क्षुतेराचामेद्" इति स्मृतमाचमनम्, एषा स्मृतिः प्रमाणं न वेति सन्देहे न मा भवेत्= इयं स्मृतिः न प्रमा भेवद् वेदं कृत्वेति यः श्रौतः क्रमः= "वेदं कृत्वा वेदिं करोति" यः श्रौतः क्रमोऽस्ति तेन विरोधादिति पूर्वपक्षे आचान्त्यादिः पदार्थोऽत्र =क्षुतेराचामेद् इति विहित माचमनं पदार्थः **क्रमो धर्मः पदार्थगः**=वेदं कृत्वा वेदिं करोतीत्यत्र श्रुतः क्रमः न स्वतः कश्चन पदार्थः अपितु पदार्थस्य विततिविशेषो धर्मः, धर्मस्य धर्म्यपेक्षत्वात्= पदार्थधर्मभूतस्य क्रमस्य धर्मिभूताचमनादि-पदार्थापेक्षत्वात् अबाधादस्ति मानता=पदार्थधर्मेण क्रमेण पदार्थस्याचमनादेर-बाधादाचमनविधायकस्मृतेः प्रामाण्यमस्तीति सिद्धान्तः।

अयमाशयः–पूर्वस्मिन्नधिकरणे प्रत्यक्षश्रुतिविरोधे स्मृतीनाम-प्रामाण्यमुक्तम् तत्र स्मृतीनां स्वरूपतोऽप्रामाण्यमिति भाष्यकारमते, अननुष्ठानलक्षणं फलतः अप्रामाण्यमिति वार्तिककारमते इति विशेषोऽवि प्रतिपादितः। सम्प्रति श्रुतिविरोधः क्वास्ति क्व नास्तीति विवेचनायाधि-करणमिदमारब्धम्। स्मृतिकाराः सर्वत्र "क्षुतेराचामेत्" "जञ्जृभ्यमाण आचामेत्" "यज्ञोपवीतिनाना कर्तव्यम्" दक्षिणाचारः" इति नियमान् पुरुषार्थतया स्मरन्ति। एतेषां नियमानामनुष्ठाने क्वचित् श्रौतक्रमभङ्गः विहितकालभङ्गश्च प्रसज्येते। तद्यथा दर्शपूर्णमासयागप्रकरणे "वेदं कृत्वा वेदिं करोतीति "श्रूयते, अत्र क्त्वाप्रत्ययेन वेदवेदिकरणयोः पौर्वापर्यं प्रतीयते। वेदो नाम दर्भमयं सम्मार्जनसाधनम् शयानवत्सजान्वाद्याकृतिविशिष्टो दर्भमुष्टिविशेषः। वेदिस्तु आहवनीयगार्हपत्यमध्यवर्त्तिनी संमार्जनखननोद्धननादिसंस्कारैः परिष्कृता भूमिः अत्र वेदवेदिकरणयोर्मध्ये क्षुज्जृम्भणादिनैमित्तिक आचमने स्मृतिविहिते प्राप्ते श्रौतक्रमविरोधः स्यात्। एवं स्मृत्युक्तानां सर्वेषां नियमानां पालने "यज्ञोपवीतिना कार्यम्" "दक्षिणाचारेण कार्यम्" इति नियमानां बहुत्वात् "पूर्वाह्णो वै देवानाम्" इति श्रौतकर्मकालस्यापि व्यतिक्रमः स्यात्। अतः श्रौतक्रमविरोधात् श्रौतकालविरोधप्रसङ्गाच्च स्मृत्युक्तनियमानामेतत्स्थले बाध

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एव युक्त इति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते—अत्र श्रौतक्रमविरोधेन श्रौतकालबाधभयेन वा स्मार्तानां परार्थभूतानामाचमनादिधर्मिणां बाधो न युक्तः। पूर्वाधिकरणे श्रुतिस्मृत्योर्विरोधे स्मृतेर्बाधः दुर्बलत्वादित्युक्तम्, तन्न्यायेन श्रुतिविहितेन क्रमेण स्मार्ताचमनानां बाधो युक्त इति पूर्वपक्षस्याशयः। अत्र मानाधीना मेयसिद्धिरिति न्यायेन प्रमाणोपजीवकत्वात् प्रमेयत्वस्य प्रमाणबलाबलस्य प्रमेयबलावलापेक्षया बलवत्वात् प्रमाणयोर्बलाबलविचारे श्रुतेः प्रबलत्वात् श्रौतक्रमानुरोधेन स्मृतेर्बाध एव युक्त इति पूर्वपक्षस्य युक्तिः। परन्तु तन्न सङ्गच्छते यतः प्रमेयसिद्ध्यर्थमेव प्रमाणमपेक्षितं प्रमेयार्थमपि प्रमाणं नापेक्षितम् प्रमेयं प्रमाणाधीनं नास्ति, प्रमाणन्तु ज्ञापकमेव न तु कारकम्। अतः प्रमाणयोः स्वरूपेण मूषकमार्जालवद्विरोधाभावेन विरुद्धप्रमेयप्रमापकत्वेनैव प्रमाणयोर्विरोधो वक्तव्यः। तदर्थं प्रमेयस्वरूप-पर्यालोचनं प्रथमं कार्यम्। प्रकृते स्मृतेः प्रमेयं धर्मिभूतमाचमनम्। श्रुतेः प्रमेयस्तु धर्मभूतः क्रमः, धर्मभूतः पूर्वाह्णादिकालश्च यद्यपि कालः धर्मिभूतो द्रव्यपदार्थस्तथापि अननुष्ठेयत्वादनुष्ठेयपदार्थावच्छेदकत्वेन विधेयत्वात् पदार्थधर्म एव। धर्मस्य च धर्म्यधीनत्वाद् धर्मधर्मिणोर्विरोधे "धर्मधर्मिविरोधे च धर्मिणो बलवत्तरा" इति न्यायेन श्रुतिप्रमेयापेक्षया स्मृतिप्रमेयस्य धर्मिण आचनमस्यैव प्राबल्यम्। एवञ्च प्रमेयस्वरूपपर्यालोचनश्रुतिप्रमेयस्य दुर्बलत्वम्, स्मृतिप्रमेयस्य प्राबल्यमिति निश्चिते तदनुरोधेन धर्मधर्मिरूपप्रमेय-बलाबलेनासञ्जातविरोधिना आचमनादिपदार्थस्यैव बलीयस्त्वमिति श्रौतक्रमस्यैव बाधो युक्तः। न च श्रुतिप्रमेयस्य क्रमस्य स्मृतिप्रमेयेणाचमनेन बाधे श्रुतेरत्यन्तबाधापत्तिरिति वाच्यम्, क्षुतेराचमनादिनिमित्तोपनिपाताभावे सावकाशत्वात् नात्यन्तबाधः। एवञ्च "प्रमाणबलाबलात्प्रमेयबलाबलं ज्याय" इति न्यायेन दुर्बलेनापि स्मृतिप्रमाणेन बलवत् प्रमेयमाश्रित्य प्रबलस्यापि श्रुतिप्रमाणस्य दुर्बलप्रमेयस्य बाध इति भाष्यकारमतेन शिष्टाकोपधिकरणम्।

वार्तिककारमतेन प्रथमं वर्णकमिदं निरूप्यते—

**जैमिनीयन्यायमाला**

**शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः।**
**न धर्मो न हि पूतं स्याद् गोक्षीरं श्वदृतौ धृतम्॥12॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

शाक्योक्ताहिंसनं = "अहिंसां परमो धर्मः" इति बौद्धैर्धर्मत्वेनोक्तं वेदाविरुद्धं धर्मः स्यान्नवेति सन्देहे धर्म एव वेदेऽपि श्रुतत्वतः =श्रुतत्वादिति पूर्वपक्षे प्राप्ते न धर्मः यथा गोक्षीरं श्वदृतौ धृतृं पूतं न भवति तथा बौद्धोक्तं अहिंसादिकमपि धर्मो नास्तीति सिद्धान्तः।

अयमाशयः–वार्तिककाराः आचमनश्रौतक्रमयोर्विरोध एव नास्ति यतः आचमनं शुद्ध्यर्थं विहितम्, प्रत्यक्षश्रुतिः "शुचिना कर्म कर्तव्यम्" शुत्विलस्य सकलवैदिकपदार्थाङ्गत्वं बोधयति। अतः वेदकरणवेदिककरणयोर्मध्ये क्षुतादिनिमित्तेनाशुचित्वे प्राप्ते तन्निराकरणार्थमाचमनं कर्तव्यम्, अन्यथा वेदेः वैगुण्यापत्तेः क्षुतादिनैमित्तिकामाचमनं वेद्या अङ्गमेव, स्वाङ्गस्य च स्वव्यवधायकत्वाभावात् स्मार्तमपि शुचित्वसिद्ध्यर्थं विहितमाचमनं वेदवेदिकरणयोः क्रमस्य व्यवधायकमेव न भवतीति पूर्वपक्ष एव न युक्त इति प्रकारान्तरेणेदमधिकरणं वर्णयान्ति।

तदनुसारेण पूर्वाधिकरणे वार्तिककारीयवर्णके शाक्यादिस्मृतीनां प्रत्यक्षश्रुतिविरुद्धविषये वेदमलतया प्रामाण्यं निराकृतम्, अत्र तु शाक्यादिनिबन्धेषु यदहिंसाब्रह्मचर्यास्तेयादिवचनं तत् श्रुतिस्मृतिविहितमेवेति तद्विषये शाक्यस्मृतीनामपि प्रामाण्यं भवत्विति पूर्वपक्षे प्राप्ते सिद्धन्तोऽभिधीयते–,

धर्मः "चोदनालक्षणोऽर्थो धर्मः "इत्यधिकरणे वेदादेव प्रमितः अलौकिकश्रेयः साधनताको यागादिरेवेति निर्णीतः। "स्वाध्यायोऽध्येतव्य" इति नियमविधिना वेदादेव धर्मप्रमितिर्नियमिता न स्मृत्यादिभिरिति, वैदिकशिष्टप्रणीतैः स्मृतिग्रन्थैश्च वैदिका एवार्थाः स्मृता इति तदर्थानां तन्मूलवेदादेव धर्मत्वं सिद्ध्यति। शाक्यादिप्रणीतनिबन्धानान्तु वेदमूलत्वाभावात् तेभ्यो ज्ञातो धर्मः फलं न साधयति। यथात्यन्तं पवित्रमपि गोक्षीरं श्वदृतौ 'स्थापितं पवित्रमिति कर्मानुष्ठाने नोपयुज्यते तथा वेदद्वेषिणां शाक्यादीनां मुखान्निस्सृतं पवित्रं वचनमपि कर्मानुष्ठाने नोपयुक्तम्। अतः अहिंसादीनां शाक्यादिप्रतिपाद्यत्वमुखेन धर्मत्वं नास्ति अपि तु वेदप्रतिपाद्यत्वेनैवेति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निश्चीयते। न च प्रमाणयोर्विरोधः प्रमेयस्वरूपविरोधनिबन्धनः न तु स्वतः इति अहिंसा धर्म इति बौद्धोक्तः वेदोक्तश्चेति प्रमेयस्वरूपे विरोधाभावात् कथं बौद्धोक्तस्य धर्मत्वं नास्तीति वाच्यम्, बौद्धस्मृतीनां प्रमाणत्वस्यैवाभावात् प्रमाणयोर्विरोधोऽस्ति न वेति प्रश्न एव नोदेति। यतः प्रामाण्यञ्चानधिगताबाधित-विषयकत्वमेव। शाक्योक्तानां ब्रह्मचर्याहिंसादिविषयाणां वेदोपदिष्टत्वं नाङ्गीक्रियते चेत् पौरुषयत्वाद्भ्रान्त्यादिमूलकत्वा द्बधितत्वेन प्रामाण्यं न सिद्ध्यति। वेदोपदिष्टत्वमङ्गीक्रियते चेत् वेदादेवाधिगतत्वादनधिगतत्वाभावादेवाप्रामाण्यं तद्बोधकशाक्यदिवाक्यानाम्। मन्वादिप्रणीतस्मृतीनान्तु वेदे विप्रकीर्णानां विषयाणामनधिगतवत्स्थितानां सङ्क्षेपेण बोधकत्वेन वेदमूलकतया-बाधितविषयकत्वेन च प्रामाण्यं सुस्थितमेवेति विशेषः। एवञ्च शाक्यादिस्मृतीनां प्रामाण्याभावात् शाक्यवाक्यैः ज्ञातो धर्मः फलं न साधयतीति सिद्धम्। तदुक्तं भट्टपादैः–

**यथैवान्यायविज्ञाताद्वेदोल्लेख्यादिपूर्वकात्।**
**श्रमेणाधिगताद्वापि धर्मज्ञानं न सम्भवतम्।।**

**तथातिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम्।**
**संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता।।** इति।

अत एव धर्मप्रतिपादकशास्त्राणि धर्मस्थानानीति याज्ञवल्क्यादिभिः परिगणितानि–

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।** इति

एवं परिगणितेष्वनन्तर्भूतानां वेदबाह्यानां शाक्यादीनां स्मृतीनां धर्मे सर्वथाप्रामाण्यमिति वार्तिककाराणां प्रथमं वर्णकम् "शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वाद्" इति सूत्रस्य व्याख्यानमुखेन सिद्धम्। अयं विवेकः शाक्योक्तानां चैत्यवन्दनादीनां पौरुषेयतया भ्रान्यादिमूलतया धर्मे न प्रामाण्यम्, तटाकारामण्डपनिर्माणादीनां श्रुत्यापि अनुमोदितत्वात् श्रुतितः तदनुसृत्य प्रवृत्तेभ्यः शास्त्रेभ्यः ज्ञात्वानुष्ठिते एव फलजनकत्वं शाक्यग्रन्थेभ्यः ज्ञात्वानुष्ठिते फलजनकत्वं न सिद्ध्यति स्वाध्यायोऽध्येतव्य" इत्यत्र नियमविधेः स्वीकारादि-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्यस्मिन् वर्णके वर्ण्यते। हिंसानिषेधरूपाहिंसायां तु वेदेनैव ज्ञाता हिंसानुष्ठिता प्रत्यवायजनिका भविष्यति वेदेनैव ज्ञातं तद्वर्जनं वा प्रत्यवायपरिहाराय भविष्यतीति नियमस्तु न युक्त: यत: विधिषु श्राद्ध: अधिकारी निषेधेषु श्रद्धावान् अश्रद्धावान् वा य: कोऽपि निषिद्धकर्मकर्ता प्रत्यवायभाग्भवतीति स्वीकारात्। अत एव निषेधवाक्येष्वध्ययननियमस्य जपयज्ञादिष्वेवोपयोग इति स्वीक्रियते। अत: बौद्धोक्तहिंसादिनिषेधरूपाणा अहिंसादीनामधर्मत्वमनेन न्यायेन न सिद्ध्यति किन्तु शाक्यदिनिबन्धे ष्वहिंसावचनं हिंसासामान्यनिषेधपरं न तु विहिताग्नीषोमीयदिपशुहिंसाव्यतिरिक्तविषयमिति प्रत्यक्षवेदविरोधात्पूर्वाधिकरणन्यायेनैवाधर्मत्वं सिद्ध्यति।

"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्नि" ति सूत्रस्य व्याख्यानमुखेन वार्तिककारा अत्र विचारान्तरमपि दर्शयन्नि तदत्र श्रीमाधवाचार्यै: श्लोकरूपेण निरूप्यते–

**जैमिनीयन्यायमाला**

**सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता।**
**अष्टकादिरिवैतस्य समूलत्वात्प्रमाणता॥13॥**

**प्रकाशिका**

सदाचार:–वसन्तोत्सवाद्याचार: प्रत्यक्षस्मृतिष्वप्यनिबद्धा: अप्रमा मा वा=प्रमाणमप्रमाणं वेति सन्देहे निर्मूलत्वाद् श्रुतिमूलत्वाभावाद् भ्रान्त्यादिमूलत्वादप्रमाणमिति पूर्वपक्षे प्राप्ते अष्टकादिरिवैतस्य = अष्टका कर्तव्या इत्यादि स्मृतेरिवाचारस्य समूलत्वात्प्रमाणता= वेदादिमूलत्वात् प्रामाण्यमिति सिद्धान्त:।

अयमाशय:–स्मृत्यधिकरणे वैदिकमन्वादिपरिगृहीतत्वेन वेदमूलतया स्मृतीनां प्रामाण्यमुक्तम्, तेनैव हेतुना शिष्टाचाराणामपि प्रामाण्यं सिद्धमेव, तदेवात्र पुन: स्मृतिष्वनिबद्धानां कथं प्रामाण्यमित्याक्षिप्य समाधीयते। अथवा पूर्वस्मिन् वर्णके शास्त्रपरिमाणत्वादिति सूत्रेण पुराणन्यायमीमांसेत्यादिपरिमितशास्त्रेभ्य एवावगतो धर्म: फलं निष्पादयति नान्यथेति बाह्यागमानां धर्मेऽप्रामाण्यमुक्तम्, तर्हि वसन्तोत्सवाद्याचाराणां स्पष्टं परिगणित–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रेष्वनिबद्धत्वात् कथं प्रामाण्यमिति निरूपणार्थं प्रवृत्तमिदमधिकरणम्। अत्र पूर्वपक्षः—यद्यप्यष्टकादिस्मृतिवदेव धर्मबुद्ध्या वैदिकपरिग्रहस्य लोभादिहेतुदर्शनाभावस्य श्रुतिस्मृतिविरोधाभावस्य चेति धर्मप्रामाण्यहेतोः वसन्तोत्सवाद्याचारेषु सत्वेऽपि स्मृतिवदनिबद्धत्वात्तेषां धर्मे प्रामाण्यं न युक्तम्। यदि सदाचारमूलभूताः श्रुतयः मन्वादिस्मृतिकाराणां प्रत्यक्षाः स्युः तदाष्टकादिवेदेव स्वग्रन्थे निबद्धाः स्युः। किन्तु तादृशाचाराणां स्मृतिषु प्रत्यक्षं क्वापि साक्षान्न प्रतीयते। यदपि च–श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।। स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनाम्। यस्मिन् देशे य आचारः स सदाचार उच्यते इति स्मृतिकारैर्मन्वादिभिः स्वग्रन्थे सामान्यतः सदाचारस्य प्रामाण्यं धर्मे स्वीकृतमिति प्रतिभाति तदपि तैः श्रुतिः सदाचारस्य मूलभूता न दृष्टेति श्रुतिमूलतया सदाचारस्य प्रामाण्यसाधने न प्रमाणम्। अतः अत्र सामान्यतो निबन्धनं श्रुतिसंवाद्याचाराणां प्रामाण्यप्रतिपादनपरमिति ज्ञायते। किञ्च स्मृतौ सदाचारस्य सामान्यतः धर्मे प्रामाण्यमुक्तहेतुना यदि सदाचारस्य मूलभूता श्रुतिः कल्प्यते चेत् किं सदाचाराणां मूलभूतमेकं श्रुतिवाक्यं कल्प्यते उत बहूनि श्रुतिवाक्यानि कल्प्यन्त इति विचारणीयम्। यदि सर्वेषामाचाराणां मूलमेकवाक्यं कल्प्यते चेत्तदनुपपन्नम्, यतः तत्तद्देशजातिकुलभेदेन भिन्नानां क्वचित् क्वचित् परस्परं विरुद्धानां बहूनामाचाराणां मूलमेकश्रुतिवाक्यमस्तीति कल्पनानुपपत्तेः। यदि तु सामान्यस्मृतिवदेव "सदाचारः प्रमाणम् इत्येवं रूपं श्रुतिवाक्यं कल्प्यते तदा श्रुतेः मूलमाचरणमर्यादाचारमूलिका श्रुतिः धर्मे प्रमाणम्, न तु श्रुतिमूल आचार इति वैपरीत्यापत्तिः। "तस्मात् शास्त्रं प्रमाणन्ते कार्याकार्यव्यवस्थितौ' इति गीताचार्यवचनं विरुद्ध्येत। अत एव क्रियारूपाणामाचाराणामशब्दात्मकत्वात् पुरुषहितबोधकत्वानुपपत्तेः धर्मे प्रामाण्यानुपपत्तिः। किञ्च श्रुतिविरुद्धस्याप्यर्थस्य शिष्टैः पूर्वै रिदानीन्तनैश्चाचरणान्न तदाचाराणां प्रामाण्यं युक्तम्। तथा हि "प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्" इति प्रजापतेः स्वदुहितृगमनम् इन्द्रस्याहल्यायाः परभार्याया गमनम् नहुषस्य शशीवाञ्छा, वसिष्ठस्य पुत्रशोकार्दितस्यात्महत्योपक्रमः,पुरूरवस उर्वशीवियोगादात्म हत्योपक्रमः विश्वामित्रस्य चण्डालयाजनम्, भीष्मस्यानाश्रमिणोऽवस्थितिः, तस्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दाशरथेश्चापत्नीकस्य क्रतुहरणम्, धृतराष्ट्रस्यान्धस्य यागः, युधिष्ठिरस्यार्जुन-भार्यापरिणयः, युधिष्ठिरस्याचार्यविप्रद्रोणवधर्थमनृतभाषणम् अर्जुनस्य मातुलदुहितृसुभद्रापरिणयः, व्यासस्य गृहीतब्रह्मचर्यस्य भ्रातृभार्ययोः अम्बिकाम्बालिकयोर्धृतराष्ट्रपाण्डूत्पादनम्। तस्यैव दास्यां विदुरोत्पादनम्, इदानीन्तनानामपि आहिच्छत्रमथुरानिवासिब्राह्मणानां सुरापानम्, उदीच्यानां केसर्यश्वतरखरोष्ट्रोभयतोदत्क्रयविक्रयभार्यानुपनीतसहभोजनम्, दाक्षिणात्यानां मातुलदुहितृपरिणयः इत्येवं श्रुतिविरुद्धाचाराणां बहूनां पुराणेतिहासाभ्यां साम्प्रतिकानान्तु प्रत्यक्षतः अवगमात् कथमाचाराणां श्रुतिमूलतया प्रामाण्यं स्यात्। अतः श्रुतिसंवाद्याचाराणामेव धर्मे प्रामाण्यमिति स्मृतिकाराणां "आचारश्चैव साधूनामिति वदतां तात्पर्यमिति ज्ञायते। अतः स्मृतिष्वनिबद्धानां वसन्तोत्सवादीनां धर्मे प्रामाण्यं नास्तीति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते धर्मबुद्ध्यानुष्ठितः सदाचारोऽपि धर्मे प्रमाणम्। स्मृत्यधिकरणे वैदिकमन्वादि-प्रणीतत्वेन शिष्टत्रैवर्णिकपरिगृहीतत्वेन स्मृतीनां श्रुतिमूलतया प्रामाण्यमुप-पादितम्। समानन्यायेन शिष्टत्रैवर्णिकपरिगृहीतत्वेन सदाचाराणां श्रुतिस्मृति-मूलतया प्रामाण्यं स्वीकार्यम्। तत्र आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् इति सदाचारान्मूलभूता स्मृत्तिः कल्प्यते तन्मूलतयाऽऽचारः धर्मबुद्ध्यानुष्ठितः धर्मे प्रमाणमिति स्थितिः। रागादिहेत्वदर्शनश्रुतिविरोधादर्शन वैदिकशिष्टपरिगहरूपधर्मलिङ्गस्य स्मृतिरूपेण निबद्धेष्वनुष्ठानेषु धर्मबुद्ध्या वैदिकानामाचरणेषु ग्रन्थरूपेणानिबुद्धेषु च समत्वाद्यथा स्मृतिः प्रमाणन्तथा शिष्टाचरणमपि, निबन्धत्वानिबन्धत्वयोरप्रामाण्यग्राहाकत्वाभावात् किञ्च स्मृतिकारैः तत्तद्देशजातिकुलभेदभिन्नानामनेकाकाराणां पृथक् पृथक् स्वरूपेण निबन्धने ग्रन्थगौरवभिया लाघवेन सामान्यात्मना शिष्टाचारः प्रमाणमिति निबद्धमेव। यदुक्तं मन्वादिभिः सामान्यात्मना सदाचारः प्रमाणमिति निबद्धम्, तनैव ज्ञायते तैः सदाचारमूलभूता श्रुतिर्न दृष्टा, अतः श्रुतिमूलत्वाभावा-त्सदाचाराणां प्रामाण्यं न सिद्ध्यतीति तन्न, ग्रन्थगौरवभियैव तत्तद्देशजातिकुल-भेदभिन्नानां बहूनामाचाराणां स्वरूपेणोल्लेखो न कृत इति सामान्यात्मना सदाचारस्य प्रामाण्यप्रतिपादनादेव बहुभेदभिन्नानां समेषामाचाराणां मूलभूतानि श्रुतिवाक्यानि तैर्दृष्टान्येव स्युरित्यनुमानसम्भवात्। अन्यथा स्मृतिंप्रतिपादितस्य कस्यापि प्रत्यक्षश्रुतिसंवादरहितस्य प्रामाण्यं न सिद्ध्येत्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यच्चोक्तं स्मृतिकारैः सदाचारस्य प्रामाण्यं सामान्यात्मना प्रतिपादितम् तेन किं सामान्यत एका श्रुतिः कल्प्यते अनेका वेति तत्रोच्यते उभयथापि युज्यत इति। प्रथमपक्षे सदाचाराणां मूलभूता श्रुतिरेकैव सदाचारः प्रमाणम्" इति। न च श्रुतिः सदाचारः प्रमाणमिति श्रावयतीति सदाचारमूलतया श्रुतिः प्रमाणं न तु श्रुतिमूलतया सदाचारः प्रमाणमिति वैपरीत्यापत्तिरित्युक्तमिति वाच्यम्। श्रुतेः सदाचारस्य चानादित्वेन न दोषः, यथा व्रीहिभिर्यजेत इति श्रुतिः अनादिलोकव्यवहारसिद्धव्रीह्युपजीव्यैव प्रवृत्तापि न तस्य आदिमत्ता, तथानादिवृद्धव्यवहारसिद्धाचारस्वरूपमुपजीव्यैव सदा चारप्रामाण्यबोधकशास्त्रस्य प्रवृत्तावपि न तस्यादिमन्तेति युज्यते। न चैवं शिष्टव्यवहारादेवाचारस्वरूपावगतौ तदुत्पत्तिविधेर्वैय्यर्थ्यमिति वाच्यम्। आचारस्वरूपस्य प्रमाणान्तरेणावगतावपि शिष्टानामेवाचारः कर्तव्यः नान्येषामित्येवं नियमपरत्वेनाप्युपपत्तेः। एवञ्च तत्तद्देशजातिकुलभेदेनभिन्नानां बहूनामाचाराणामेकश्रुतिमूलकत्वेन प्रामाण्यमुपपद्यते। आचारभेदेन तत्तदायारम् लभूतानामनेकवाक्यानां कल्पनेऽपि न दोष इति द्वितीयविधापि युज्यते। न चानन्तश्रुतिकल्पने तावतां पाठासम्भवादपठितानां मूलत्वस्य स्मृत्यधिकरणे निरासादिति वाच्यम्; अनेकेषामपि वाक्यानां प्रपाठकमात्रेणोपसंहारोपपत्तेर्न दोषः। "तस्मात् शास्त्रं प्रमाणन्ते" वाक्यञ्च न विरुद्धम्, सदाचारस्य शास्त्रमूलतयेव प्रामाण्याङ्गीकाराद् अत एव क्रियारूपत्वेनाशब्दात्मकत्वादाचाराणामशास्त्रत्वात्कथं प्रामाण्यमिति शङ्कापि परास्ता, सदाचाराणां स्वतः प्रामाण्यस्यानुक्तत्वात् श्रुतिमूलत्वेनैव प्रामाण्यस्योपपादितत्वात्। यच्चोक्तं श्रुतिस्मृतिविरुद्धस्याप्यर्थस्य पूर्वैरिदानीन्तनैश्चाचरणान्न तदाचाराणां प्रामाण्यमिति तदङ्गीक्रियत एव। श्रुतिविरुद्धानामाचरणानां विरोधाधिकरणनयेनाप्रामाण्यमेव, स्मृतिविरुद्धानाञ्चा- चाराणामप्रामाण्यमग्रे प्रतिपादयिष्यते, न चैतावता श्रुतिस्मृत्यविरुद्धानां शिष्टत्रैवर्णिकपरिगृहीतानामाचाराणां वैदिकमन्वादिप्रणीतस्मृतिवदेवाप्रामाणण्यं न सिद्ध्यति। वेदेऽपि महाव्रते "प्रेङ्खम्" इत्यस्यार्थवादे यदा वै प्रजा मह आविशन्ति "प्रेङ्खम्" इत्यत्र महशब्दवाच्योत्सवाचारप्रसिद्धिरनूद्यमाना आचारप्रामाण्यं गमयति। यदेव किञ्चनानूचानोऽभ्यूहत्यार्षं तद्भवति" इति च श्रुत्यैव शिष्टाचारस्य शिष्टात्मतुष्टेश्च प्रामाण्यमभ्यनुज्ञातमिति सदाचारोऽपि धर्मे प्रमाणमिति चतुरस्रम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पञ्चमाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**यवादिशब्दाः किं द्व्यर्थां नो वार्यम्लेच्छसाम्यतः।**
**दीर्घशूकप्रियङ्ग्वाद्या द्वयेऽप्यर्था विकल्पिता:॥14॥**

**यत्रान्या इति शास्त्रस्थप्रसिद्धिस्तु बलीयसी।**
**शास्त्रीयधर्मे तेनात्र प्रियङ्ग्वादिर्न गृह्यते॥15॥**

## प्रकाशिका

यवादिशब्दा: "यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चते इत्येवं श्रुतौ यववराहशब्दा: किं द्व्यर्था: अर्थद्वययुक्ता: नो वेति सन्देहे आर्यम्लेच्छसाम्यत: = आर्याणां म्लेच्छानाञ्च व्यवहारस्य शक्तिग्रहकारणस्य समानत्वात् दीर्घशूकप्रियङ्गवाद्या=आर्यव्यवहाराद् दीर्घशूक इति यवशब्दस्यार्थ: म्लेच्छव्यवहारात् प्रियङ्गुधान्ये यवशब्दस्य शक्तिरिति द्वयेऽप्यर्था विकल्पिता:= अर्थद्वयस्यापि सम्भवात् विकल्पेन यवशब्दस्योक्तार्थद्वयमध्ये य: कोऽप्यर्थ: गृहीतुं शक्यते इति पूर्वपक्षे प्राप्ते समाधिरभिधीयते "यत्रान्या" इति शास्त्रस्थप्रसिद्धिस्तु यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" इति वाक्यशेषे श्रवणात् शास्त्रस्थप्रसिद्धि: बलीयसी शास्त्रीयधर्मे–शास्त्रैकगम्ये धर्मे तेनात्र प्रियङ्ग्वाद्या न गृह्यते अपितु दीर्घशूकादिरेव गृह्यते इति।

अयमाशय:–पूर्वस्मिन्नधिकरणे भाष्यकारमतेन श्रौतक्रमस्मार्त-पदार्थयोर्विरोधे स्मार्तपदार्थस्येव बलवत्त्वं प्रतिपादितम्। वार्तिककारमते तु स्मृतिष्वनिबद्धानां वैदिकपरिगृहीतानां शिष्टाचाराणां धर्मे प्रामाण्यं प्रतिपादितम्। अत्र च शब्दार्थप्रयोगस्याचाराणां विप्रतिपत्तौ बलबलचिन्तनं प्रस्तूयत इति प्रसङ्गसङ्गत्या प्रवृत्तमिदमधिकरणम्। ननु शब्दार्थप्रयोगस्य धर्मबुद्ध्यानुष्ठीय-त्वाभावाद्व्यवहारार्थमेव क्रियमाणत्वात् पूर्वाधिकरणे वार्तिककारमते धर्मबुद्ध्या अनुष्ठीयमानानामेवाचाराणां धर्मे प्रामाण्यस्योपपादितत्वाद्विषयभेदात् कथं प्रसङ्गसङ्गतिरिति चेदुच्यते साधूनेव प्रयुञ्जीत नासाधून् इति स्मृते: व्याकरणाधिकरणे वेदमूलत्वस्य प्रतिपादयिष्यमाणत्वात् तदनुसारेण साधुशब्दोच्चारणस्यापि धर्मबुद्ध्यैव क्रियमाणत्वात्–धर्मबुद्ध्यानुष्ठीयमानत्वस्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वसन्तोत्सवाद्याचारे शब्दार्थप्रयोगरूपाचारे च समत्वात् शिष्टाचाराणां धर्मे प्रामाण्ये प्रतिपादिते तद्विशेषस्य शब्दार्थप्रयोगरूपाचारस्य विप्रतिपत्तौ कथं प्रामाण्यनिर्णय इति प्रसङ्गादेवोपस्थितमिति न दोषः।

"यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चत" इति श्रूयते। अत्र यवशब्दस्य वराहशब्दस्य चार्थविषये विप्रतिपत्तिः। यतः यवशब्दमार्या दीर्घशूकेषु प्रयुञ्जते, वराहशब्दञ्च सूकरे। म्लेच्छास्तु यवशब्दं प्रियङ्गुधान्ये वराहशब्दञ्च कृष्णशकुनौ प्रयुञ्जते, अतः यवशब्दस्य वराहशब्दस्य चार्थविषये विप्रतिपत्तिः। किं यववराहशब्दौ द्व्यर्थकौ उत यवशब्दस्य वराहशब्दस्य च आर्याणां प्रयोगानुसारेण दीर्घशूकधान्ये सूकरे च यथाक्रमं शक्तिरिति सन्देहः। न च पूर्वस्मिन्नधिकरणे त्रैवर्णिकपरिगृहीतस्यैव वसन्तोत्सवाद्याचारस्यैव प्रामाण्यमुपपादितम्। अतः म्लेच्छानां व्यवहारस्य त्रैवर्णिकापरिगृहीत्वादेवाप्रामाण्यमिति पूर्वाधिकरणेनैव गतमिति वाच्यम्। शब्दप्रयोगात्मकाचारस्य उत्सवानुष्ठानात्मकाचारस्य च किञ्चिद्वैलक्षण्यात् उत्सवाद्याचारस्य विषये शिष्टानामार्याणामेवाचारस्य प्रामाण्यं पूर्वमुपपादितम्, शब्दप्रयोगात्मकाचारस्य च विषये त्वार्यम्लेच्छयोर्विशेषा भावान्म्लेच्छप्रयोगानुसारेणाप्यर्थनिर्णयो युक्त इति विशेषशङ्काया निराकरणार्थ मिदमधिकरणम्।

अत्रायं पूर्वपक्षः—अस्य पदस्यायमर्थ इति निश्चयः प्रथमं व्यवहारादेव भवति, तत्र व्यवहारः आर्याणामेव म्लेच्छानामेवेति नियमे प्रमाणाभावात् आर्यव्यवहारादपि म्लेच्छव्यवहारादपि शक्तिग्रहो भवतीति स्वीकार्यम्। आर्यव्यवहाराद् यदि यवशब्दस्यार्थः दीर्घशूकधान्यमिति म्लेच्छव्यवहाराच्च प्रियङ्गुधान्यमिति ज्ञायते तदा यवशब्दो दीर्घशूकप्रियङ्गुधान्ययोर्वाचकः सैन्धवादिशब्दवदित्येव स्वीकार्यम्। अनुष्ठानविषयेऽगत्या स्वेच्छया विकल्पः आश्रयणीयः, यवधान्येन प्रियङ्गुधान्येन वानुष्ठानं कार्यम्। एवं पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते" यवमयश्चरुः" इत्यत्र यवशब्दो दीर्घशूकधान्यवाचकः, वराहशब्दश्च सूकरवाचकः "वाराही उपानहावुपमुञ्चत इत्यत्रेति स्वीकार्यमिति। वैदिकशब्दार्थनिश्चये वैदिकानामेव व्यवहारस्यादरणीयत्वात्। वैदिकव्यवहारस्य चाविच्छिन्नपारम्पर्यागतत्वात्, म्लेच्छानां व्यवहारस्याविच्छिन्नपारम्पयगितत्वं वक्तुं न शक्यते। यतः वैदिका धर्माधर्मयोः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शब्दैकगम्यत्वमित्ति तयोरविप्लुतिलिप्सया शब्दार्थतत्वं विविच्य पालयन्ती निश्चीयते। म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथञ्चित् सिद्धेः गावीगोपीत्यादिना विकृतशब्दप्रयोगेणापि गोव्यक्तेर्बोधसम्भवात् शब्दार्थे व्यवहारस्याविप्लुतिसिद्धौ न यतन्ते। वैदिकास्तु शक्तिभ्रमादवाचकशब्दप्रयोगे गावीगोणीशब्दप्रयोग इवापशब्दप्रयोगनिमित्तप्रायश्चित्तभीत्या शब्दार्थतत्त्वं विविच्य परम्परां परिपालयन्ति। आर्यम्लेच्छयोर्मध्ये केषां व्यवहारस्य शास्त्रीयशब्दस्यार्थ-निर्णये प्रामाण्यं केषां नेत्यत्र विनिगमने अविप्लुतसम्प्रदायसिद्धत्वासिद्धत्वरूप-प्रमाणस्य सत्वात् सत्यां गतौ एकस्य शब्दस्यानेकार्थत्वस्वीकारस्यान्याय्यत्वात् प्रकृते यवादिशब्दानां दीर्घशूकादिरेवार्थ इति युक्तम्। किञ्च यवशब्दस्य दीर्घशूकप्रियङ्गुधान्ययोः वाचकत्वे एककालेऽर्थद्वय ग्रहणासम्भवात् विकल्पेनानुष्ठानापत्तिः, विकल्पे चाष्टदोषदुष्टता। तथाहि यवशब्दप्रयोगे सति यदा दीर्घशूकधान्यं गृह्यते तदा प्रियङ्गुधान्यार्थत्वग्राहकप्रमाणे प्राप्तप्रामाण्यपरित्यागः (1) अप्राप्तप्रामाण्यस्वीकारश्चेति (2) दोषद्वयम्, पुनः यवशब्दप्रयोगे यदा प्रियङ्गुधान्यं गृह्यते तदा प्रियङ्गुधान्यार्थत्वग्राहकप्रामाणे परित्यक्तप्रामाण्यस्वीकारः (3) स्वीकृताप्रामाण्यपरित्यागः (4) इति दोषद्वयम् दीर्घशूकधान्यार्थग्राहकप्रमाणे च प्राप्तप्रामाण्यपरित्यागः (5) अप्राप्ताप्रामाण्य-स्वीकारश्चेति (6) दोषद्वयम्, पुनः तृतीयवारं यवशब्दप्रयोगे यदा दीर्घशूकधान्यं गृह्यते तदा दीर्घशूकधान्यार्थत्वग्राहकप्रमाणे स्वीकृताप्रामाण्यपरित्यागः (7) परित्यक्तप्रामाण्यस्वीकारश्चेति (7) दोषद्वयम्, एवं पर्यायत्रयेण अष्टदोषदुष्टता विकल्पाश्रयणे पसज्यते। "व्रीहिभिर्वा यवैर्वा" इत्यत्र तु श्रुत्यैव यागसाधनत्वेन द्रव्यद्वयस्य विधानादगत्या विकल्पः स्वीक्रियते। प्रकृते च आर्यव्यवहार-सिद्ध एवार्थः वैदिकप्रयोगे यवादीनां स्वीक्रियते इति युक्तम्। किञ्च यवशब्दस्य दीर्घशूकार्थवाचकत्वे वाक्यशेषोऽपि प्रमाणम् तथा हि "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति इति वाक्यशेषे इतरौषधिविनाशकाले वसन्तकाले यवधान्यस्य मोदमानत्वं श्रूयते, तत्तु दीर्घशूकधान्येष्वेव सङ्गच्छते। शरत्कालिकानां प्रियङ्गूणां वसन्ते स्वरूपगन्धस्याप्यभावाद् वाक्यशेषादपि यवशब्दो दीर्घशूकपर इति निश्चीयते। अत्र यवशब्दस्य दीर्घशूकवाचकत्वं वैदिकानां शिष्टानां प्रयोगादेव स्वीक्रियते, वाक्यशेषस्तु शक्तिनिश्चायकोऽभ्युच्चयहेतुः। अत एव "यत्रान्या ओषधयो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

म्लायन्ते अथैते मोदमाना एवोत्तिष्ठन्ति" इति वाक्यशेषस्य अन्यौषधीनां म्लानकाले फाल्गुनादौ मोदमानत्वस्य गोधूमादौ विद्यमानत्वेऽपि तेषां यवशब्दवाच्यत्वं नास्ति तेषु वैदिकानां यवशब्दप्रयोगाभावात्। अत एव चास्य विचारस्य वाक्यशेषाधिकरणन्यायेन गतार्थता नास्ति, तत्र हि वाक्यशेषाधिकरणे "अक्ताः शर्करा उपदधाति" इत्यत्र विध्युद्देशस्य तैलादिद्रवद्रव्यमात्रसाधारण्यात् प्राग्वाक्यशेषात् सन्देहः अञ्जनसाधनीभूतं द्रव्यं तैलं वा घृतं वान्यद्वेति, तन्निर्णयश्च "तेजो वै घृतम्" इति घृतस्तुतिरूपवाक्यशेषात् प्रकृते अञ्जनसाधनीभूतं द्रवद्रव्यं घृतमेवेति निर्णीतम्। यववराहाधिकरणेऽत्र तु वाक्यशेषात् प्रागर्थान्तरमेव गृहीतमर्थात् यवशब्दः उभयार्थक इति विपरीतनिर्णय एवास्ति न सन्देहः। स च विपरीतनिर्णयः वाक्यशेषेण बाध्यत इति वाक्यशेषश्चाभ्युच्चयत्वेनोक्त इत्यस्ति विशेषः। एवमेव वराहशब्दस्यापि वैदिकानां प्रयोगात्सूकरवाचकत्वे निश्चिते "वराहं गावोऽनुधावन्ति" इति वाक्यशेषोऽपि वराहशब्दस्य सूकरवाचकत्वे प्रमाणम्। यतः सूकरं हि गावोऽनुधावन्ति न तु खेचरं वायसं वा। अतः वाक्यशेषादपि वराहः सूकर एवेति निश्चीयते। एतावतात्र भाष्यकाराणां मतस्य न्यायमालाग्रन्थदिशा वर्णनं कृतम्। वस्तुतस्तु भाष्यकारैः "यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चते" "वैतसे कटे प्राजापत्यान् सञ्चिनोति" इत्युदाहृत्य आर्यम्लेच्छविशेषमनुपन्यस्यैव केचिद् यववराहवैतसशब्दान् प्रियङ्गुवाय-सजम्बुवृक्षेषु प्रयुञ्जते अन्ये दीर्घशूकसूकरवञ्जुलेषु प्रयुञ्जते इति प्रयोगद्वयस्यापि तुल्यबलत्वात् प्रियङ्ग्वादीनां दीर्घशूकादीनाञ्च यवादिशब्दार्थ-त्वाध्यवसानाद् विकल्पेन ग्रहणमिति पूर्वपक्षयित्वा यत्रान्या ओषधयो म्लायन्ते" इति वाक्यशेषाद् यवा दीर्घशूका एव, "वराहं गावोऽनुधावन्ति" इति वराहः सूकर एव, "अप्सुजो वेतस" इति वाक्यशेषाच्च वेतसशब्दस्य च वञ्जुलवाचकत्वमेवेति निर्णीतम्। आचार्यैस्तु यथाश्रुतं भाष्यमत्र वाक्यशेषाधिकरणेन गतार्थं भवति, यतः यथाश्रुतभाष्ये आर्यम्लेच्छविशेषो-पादानाभावात् तुल्यबलत्वात् प्रयोगस्य वाक्यशेषात् प्राक्सन्देह एव न विपरीतनिर्णय इति वाक्यशेषाधिकरणेन साम्यमिति मत्वा भाष्यमार्यम्लेच्छ-विगानाभिप्रायमिति व्याख्यातम्। शास्त्रदीपिकापि इममप्यर्थं समर्थयति भाष्यमप्यार्यम्लेच्छविगानाभिप्रायं व्याख्येयम्, वाक्यशेषश्चाभ्युच्चयत्वेनोक्तः न मूलहेतुतयेति। भाष्येऽपि "कः पुनरत्र निर्णयः? यः शास्त्रस्थानां स

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शब्दार्थः के शास्त्रस्थाः शिष्टा" इत्यादिना शिष्टप्रसिद्धिबलवत्त्वेन सिद्धान्तकथनादेवं वक्तुं शक्यते भाष्यमार्यम्लेच्छव्यवहारविमतिपरम्, भाष्ये वाक्यशेषश्चाभ्युच्चयत्वेनोक्त इति।

वार्तिककारैरिदमधिकरणं त्रिभिर्वर्णकैर्योजितम्। प्रथमवर्णके भाष्योदाहृतानि यववराहादीन्यनुदाहरणान्येव प्रियङ्गुवायसादिषु यववराहादीनां म्लेच्छव्यवहारे आर्यव्यवहारे वा सर्वत्राप्रासिद्धेः दीर्घशूकसूकरादिष्वेव प्रसिद्धेश्च क्लेशेन भाष्यस्य आर्यम्लेच्छविगानपरतया वाक्यशेषादिति हेतोश्चाभ्युच्चयपरतया व्याख्यानस्यानौचित्यात् वाक्यशेषं विनैव यत्रार्यम्लेच्छयोरभिधानविप्रतिपत्तिः यथा गौतमस्मृतौ" पैलवौदुम्बरौ दण्डौ वैश्यस्य" इति विहिते पैलवशब्दे पैलवशब्देन क्रिं ग्राह्यमिति तदेवोदाहरणं युक्तमिति स्वीकृतम्। पैलवशब्दश्च पीलुशब्दान्निष्पन्नः पीलुशब्दश्च हस्तिवाचक इति म्लेच्छव्यवहाराज् ज्ञायते, वृक्षविशेषवाचक इति वैदिकानां व्यवहारादवगम्यते। अतः अत्र पैलवशब्देन हस्तिभवो दण्डोऽभिप्रेतः उत वृक्षभवो दण्ड इति सन्देहे उभयोस्तुल्यबलत्वाद्विकल्प इति पूर्वपक्षे प्राप्ते शास्त्रस्थशब्दार्थनिर्णये वैदिकानां प्रयोगस्यैव बलवत्त्वमिति वैदिकप्रयोगानुसारेण पीलुः अत्र वृक्षविशेष इति वृक्षविशेषस्यैव दण्डोऽभिप्रेत इति सिद्धान्तः। अत्र पूर्वपक्षे हस्तिभवो दण्डः हस्तिभवास्थिदण्ड इति श्रीभवदेवाः, गजदन्तामय इति श्रीवासुदेवदीक्षिताः। अतः अत्र पूर्वपक्षानुसारेण वैश्यस्य विहितो दण्डः गजदन्तमयो वृक्षविशेषमयो वेति विकल्पः, सिद्धान्ते तु स दण्डः वृक्षविशेषनिर्मित एवेति प्रयोजनभेदः स्पष्टमेव ज्ञायते। शास्त्रदीपिकायां सामान्यतः पीलुशब्दार्थविषये आर्यम्लेच्छयोः विप्रतिपत्तौ उभयोः तुल्यबलत्वात् पीलुशब्दस्योभयवाचकत्वमिति पूर्वपक्षे शिष्टव्यवहारस्य धर्ममूलतया बलवत्वात् पीलुशब्दः वृक्षविशेषवाचक इति शिष्टव्यवहारादेव निश्चीयते इति सिद्धान्त उक्तः। तदनुसृत्य शास्त्रदीपिकाटीका मयूखमालिका पूर्वपक्षे हस्तिनोऽपि पीलुशब्दार्थत्वाद्धस्तिवाचकत्वाभिप्रायेण पीलुशब्दप्रयोगस्य अपशब्दप्रयोगत्वाभावादाहिताग्नेरपशब्दप्रयोगनिमित्तं प्रायश्चित्तं न भवति सिद्धान्ते तु भवतीति पूर्वपक्षसिद्धान्तयोः प्रयोजनभेदं प्रतिपादयति।

अस्मिन्नधिकरणे वार्तिकारैः इतोऽप्यपरं यद् वर्णकद्वयं वर्णितम्,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदग्रे निरूपयिष्यते। तत्पूर्वमस्मिन्नधिकरणे गुरुमतं निरूप्यते-

**जैमिनीयन्यायमाला**

**यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत्।**
**न शास्त्रस्य बलित्वेन तत्प्रसिद्ध्यार्थनिर्णयात्।।16।।**

**प्रकाशिका**

यवाद्यर्थानिर्णयेन = यवशब्दस्य कोऽर्थः? वराहशब्दस्य कोऽर्थः? इति विषये आर्यम्लेच्छयोः व्यवहारे विप्रतिपत्तेर्दर्शनात् यवादिशब्दानामर्थस्य निर्णयस्याशक्यत्वात् तद्वाक्यं = यवादिशब्दघाटितं वाक्यं "यवमयश्चरुर्भवति" "इत्यादिवाक्यं न प्रमेति चेदिति पूर्वपक्षे प्राप्ते, न = तन्न युक्तम् शास्त्रस्य बलित्वेन = वाक्यशेषात्मकशास्त्रस्य बलवत्त्वात् तत्प्रसिद्ध्या =तदनुगुणार्य-व्यवहाराद्यवादिशब्दानामर्थनिर्णयात् तद्घटितं वाक्यं प्रमाणमेवेति सिद्धान्तः।

अयमाशयः—प्रमाणलक्षणेऽत्र चोदनानां प्रामाण्यं विचार्यते, तृतीये पादेऽत्र स्मृतीनां प्रामाण्याप्रामाण्यंचिन्ता न प्रवर्तते, असङ्गतेः, अपि तु "यां जनाः प्रतिनन्दन्ति" इत्यादिमन्त्राणां मन्वादिस्मृताष्टकाकार्येणानुमित-चोदनाकार्यत्वं प्रतिपाद्यते इति प्रथमाधिकरणे उक्तम्। विरोधाधिकरणे च प्रत्यक्षश्रुत्यनुमेयश्रुत्योर्विरोधे उभयोः अप्रामाण्यमुत नेति सन्देहे प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेश्च कारणजिज्ञासानिवृत्तेः स्मृतेः श्रुत्यनुमानम् यद्विधं हि विरुद्धद्वयं न दृष्टं यथा उष्णस्वभावं न शीतं न तत्रानुमितिः। श्रुत्योस्त्वन्योन्यविरुद्धार्थत्वम्" उदिते जुहोति" "अनुदिते जुहोति" इत्यादौ दृष्टमिति प्रत्यक्षानुमितश्रुत्योर्विकल्प इति पूर्वपक्षे प्राप्ते यथा प्रत्यक्षसिद्धेन वह्नावुष्णत्वेन शैत्यानुमानं बाधितं भवति तथा प्रत्यक्षश्रुतविषये स्वाध्यायात्स्वतःसिद्धास्य औदुम्बरीस्पर्शनविषयसंसर्गग्रहस्य तद्विरुद्धजघ-न्यान्यथासिद्धस्मृतेर्वेदानुमानबाधकत्वात् प्रत्यक्षश्रुते स्मृतिविरोधे सत्यपि निर्विचिकित्सं प्रामाण्यं सिद्धमेवेति सिद्धान्तः। प्रत्यक्षश्रुत्योस्तु विरोधेऽगत्या विकल्पापास्यो विरोधः प्रत्यक्षश्रुत्यनुमितश्रुत्योः विषये तु क्रमोपस्थित-योरतुल्यत्वात् जघन्यबाध एव युक्त इति वैषम्यम्। "हेतुदर्शनादि" ति सूत्रस्य अधिकरणान्तरपक्षे तु हेतुदर्शनमात्रं न बाधहेतुः दृष्टत्वेऽपि लोभस्यालौकिकार्थस्मृत्यानुगुण्यं नास्तीति स्मृत्यनुगुणो वेद एव

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मृतिमूलतयाउपेय इति स्मृत्यधिकरणराद्धान्तादिशा पूर्वपक्षे प्राप्ते अध्वर्युसम्प्रदानकदानस्मृतेः तद्वृत्तिलोभः स्वरूपतः क्लृप्तः, यतः, दृश्यन्ते हि ऋत्विजां स्वाभाविकलोभानुगुणा आचारास्तदनुगुणाश्चोपदेशाः, तेषामुपदेशेऽवैगुण्यमत्त्या स्मृतिकर्तृणामादरः, तदादराच्च स्मृतिप्रणयनमिति, वेदस्य मूलत्वन्तु कल्प्यम्। अतः क्लृप्तकल्प्ययोर्न तुल्यबुद्धिरिति क्लृप्तस्य कल्प्यापेक्षया बलवत्त्वात् क्लृप्तहानभिया नादृष्टवेदकल्पनेति स्मृतिरप्रमाणमेव। न च ऋत्विग्वषया सर्वापि स्मृतिरप्रमाणं स्यात्–

> **रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।**
> **क्व वा नोत्प्रेक्षितुं शक्या स्मृत्यप्रामाण्यहेतवः॥**

इत्युक्तरीत्या रागद्वेषादीनां सर्वत्र मूलत्वस्य क्लृप्तत्वात् अष्टकादीनामपि प्रस्मृत्युपदेशानामप्रामाण्यापतिरिति वाच्यम्। अष्टकाद्युपदेशेषु ऋत्विक्सम्प्रदान- कत्वाभावात्। न हि तादृशी उपदेशेषु ऋत्विजां कोऽपि विशेषलाभः, येन लोभादिमूलतया स्मृतेः अप्रामाण्यं स्यात्, अतः स्मृत्यनुगुणो वेद एव मूलत्वेन कल्प्य इति तेषां प्रामाण्यं सङ्गच्छते। यत्तु अध्वर्य्वादीनां दक्षिणादानादिकं स्मृतिषूपलभ्यते तदपि लोभमूलं स्यादिति शङ्कितम् तत्रोच्यते यागे दक्षिणादानमदृष्टार्थं नास्ति अपितु दृष्टार्थमेवार्थाद् ऋत्विगानत्यर्थमिति अग्रे निरूपयिष्यते। अतः ऋत्विजां दक्षिणादानं क्रतुविधिनैवाक्षिप्तम् केवलं तत्राध्वर्य्यादिवर्गप्राप्तदक्षिणाया अर्धतदर्धतत्पादतृतीयांशादिनियममात्रे तत्तत्कर्मानुरूपे स्मृतिवचनव्यापारः। अतः पुरुषानुपयुक्ते नियमांशे लोभमूलतायाः सम्भवो नास्तीतिवेदमूलतया सा स्मृतिः प्रमाणमेव। एवञ्च द्वितीयाधिकरणे प्रत्यक्षश्रुतिविरोधेऽविरोधेऽपि हेतुदर्शने स्मृतिगतमप्रामाण्यं प्रतिपादितम्। तृतीये च शिष्टाकोपाधिकरणे "आचान्तेन कर्तव्यम्" "दक्षिणाचारेण कर्तव्यम्" "यज्ञोपवीतिना कर्तव्यम्" इत्यादिस्मृतीनां प्रत्यक्षश्रुतिविरोधोऽस्ति न वेति चिन्तामुखेन विरोधाभावादहानं स्मृतेरिति स्मृत्यधिकरणस्यैव विषयव्याप्तिः प्रदर्श्यते। एवञ्च एतावता प्रत्यक्षश्रुतिविरोधाभावे हेतुदर्शनाभावे च स्मृतिमुखानां नित्यानुमेयश्रुतीनां प्रामाण्यमुपपन्नम्। सम्प्रति यववराहाधिकरणे प्रसङ्गात् यत्र तु विषये न स्मृतिः श्रुतिविरुद्धा नापि श्रुतिः स्मृतिविरुद्धेति यत्र अन्योन्यविरुद्धे श्रुतिस्मृती न स्तः किन्तु व्यवहारे द्व्यर्थविरोधात् पदार्थानध्यवसानं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र वेदस्याप्रामाण्यं स्यादिति पूर्वपक्षे तादृशं पदार्थानध्यवसानस्थलविशेषं पुरस्कृत्य पदार्थाध्यवसानप्रतिपादनमुखेन वेदस्य प्रामाण्यं स्थिरीक्रियते। तथाहि–"यवमयश्चरुर्भवति" "वाराही उपानहावुपमुञ्चते" "वेतसे कटे प्राजापत्यान् सञ्चिनोति इत्येवं यवादिपदवतीषु चोदनासु चिन्ता प्रवर्तते। ताः किमप्रमाणं प्रमाणं वेति। तदर्थञ्च यववराहादिशब्दाः किं म्लेच्छप्रयोगात् प्रियङ्ग्वायसाद्यर्था वैदिकानां प्रयोगाद् दीर्घशूकसूकराद्यर्था इति एकतरनिर्णये हेत्वभावात् तद्घटितचोदनावाक्यानि प्रमाणपदवीं नारोहन्ति उत यववराहादि-शब्दाः दीर्घशूकसूकराद्यर्था एवेति निर्णयसम्भवात् तद्घटितचोदनावाक्यानि प्रमाणपदवीमारोहन्त्येवेति विचारः प्रवर्तते। अत्र पूर्वपक्षस्तावदेवं निरूप्यते-शक्तिग्रहः प्रथमं व्यवहारादेव भवति, व्यवहारस्य चानादित्वात् शब्दार्थयोः सम्बन्धस्यापि नित्यत्वं मीमांसकानामभिमतमिति आद्यपाद एव निर्णीतम्। स च व्यवहारः म्लेच्छानां वैदिकानामित्यत्र विनिगमने प्रमाणाभावाद् व्यवहारसामान्यं म्लेच्छवैदिकसाधारणं शक्तिग्रहस्यावश्यकमिति स्वीकार्यम्। यववराहादिशब्दानां विषये आर्यम्लेच्छयोः व्यवहारयोः परस्परं विरोधात् अनेकार्थस्वीकारस्यान्याय्यत्वादर्थनिश्चयो न भवतीत्येव वक्तव्यम्। अतः सन्दिग्धयववराहादिशब्दघटितं वेदवाक्यं न प्रमाणमिति पूर्वपक्षे प्राप्ते समाधानमुच्यते।

"न शास्त्रस्य बलित्वेन तत्प्रसिद्ध्यार्थनिर्णयाद्" इति। यववराहादि-शब्दघटितं वेदवाक्यं प्रमाणमेव; वाक्यशेषात्मकवेदोपबृंहितादार्यव्यवहाराद् यवशब्देन दीर्घशूकधान्यम्, वराहशब्देन च सूकरः बोध्यते इति यववराहादिशब्दानामर्थनिश्चयसम्भवादिति। यद्यपि शब्दार्थयोः सम्बन्धस्य नित्यत्वात् तद्ग्रहे निमित्तभूतो व्यवहार आर्याणां म्लेच्छानां वेति विनिगमने प्रमाणाभावादन्यतरस्यैव व्यवहारस्य शक्तिग्रहनियामकत्वं वक्तुं न शक्यते उत्तरत्र म्लेच्छव्यवहारादपि शक्तिग्रहस्य वक्ष्यमाणत्वात् तथापि वाक्यशेषात्म-कवेदोपबृंहितत्वं प्रकृते यवादिविषये आर्यव्यवहारगम्यार्थे स्पष्टं ज्ञायत इति आर्यव्यवहारादेव यावादिशब्दानां शक्तिनिश्ययो युक्तः। अतः यवादिशब्द-घटितवेदवाक्यं प्रमाणमेवेति प्राभाकराणां राद्धान्तः।

अस्मिन्नेवाधिकरणे वार्तिककाराणां वर्णकान्तरं प्रदर्श्यते–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

योे मातुलविवाहादौ शिष्टाचारः स मा न वा।
इतराचारवन्मात्वममात्वं स्मार्तबाधनात्॥17॥
स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र सा।
अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा॥18॥

## प्रकाशिका

मातुलविवाहादौ= मातुलकन्यापरिणयादिरूपः यः शिष्टाचारः स प्रमाणं न वेति विशये इतराचारवन्मात्वम् = होलकाद्याचारवत्प्रमाणमेवेति पूर्वपक्षे स्मार्तबाधनादमात्वम् मातुलकन्यानिषेधपरस्मृत्या बाधितत्वादेतादृशाचारः अप्रमाणमेव। यतः, सर्वत्र स्मृतिमूलः शिष्टाचारः ततः शिष्टाचारस्य स्मृतिमूलतया स्मृत्यनुमानद्वारा प्रामाण्यस्य पूर्वत्रोपपादितत्वात्, अत्र अनुमेया स्मृतिः शिष्टाचारहेतुना भवति, तत्पूर्वमेव प्रत्यक्षया तु सा स्मृतिः बाध्येति शिष्टाचारस्य मूलभूतायाः स्मृतेरनुमानासम्भवात् प्रमाणान्तरमूलमेवेति शिष्टाचरणमेतादृशं न प्रमाणं धर्मे।

अयमाशयः—पूर्वत्र शिष्टाचाराणां प्रामाण्यमुक्तम्। तत्र धर्मबुद्ध्या शिष्टैः परिगृहीतत्वं हेतुत्वेनोपन्यस्तम्। स्मृतीनामपि प्रामाण्यं तेनैव हेतुना स्मृत्यधिकरणे साधितम्। अतः उभयत्र हेतोः साम्यात् स्मृत्याचारयोः प्रामाण्ये तुल्यतैव। मातुलकन्याविवाहः दाक्षिणात्येषु शिष्टाचारत्वेन प्रसिद्धः। स्मृतौ पुनः "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवराञ्चैव कृत्वा चान्द्रायणं चरेत्॥ इति मातुलकन्याविवाहस्य प्रायश्चित्तविधानादनर्थता निश्चीयते। अनर्थताबोधनेन स्मृतिः मातुलकन्याविवाहस्याधर्मत्वं बोधयति। अतः स्मृतिशिष्टाचारयोर्विरोधे कस्य दौर्बल्यं कस्य प्राबल्यमिति संशये पूर्वपक्ष एवमुपस्थितो भवति। पूर्वत्रोक्तदिशा शिष्टपरिगृहीतत्वहेतुना स्मृतिशिष्टाचारयोः प्रामाण्यमभिमतमिति कस्य प्राबल्यं कस्य दौर्बल्यमिति प्रश्न एव नास्ति उभयोः समानयोगक्षेमत्वात्। न ह्याचारात् स्मृतिवाक्यमनुमाय तेन श्रुतिरनुमीयत इति आचाराणां द्व्यन्तरितप्रामाण्यकतया साक्षाच्छ्रु-त्यनुमापकस्मृतिवाक्यापेक्षया दौर्बल्यं वक्तुं शक्यते श्रुतिकल्पकताबीजस्य धर्मबुद्ध्या शिष्टपरिग्रहस्याचारेष्वपि दर्शनात् स्मृतिकल्पनाया अनपेक्षितत्वात्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवञ्च धर्मे प्रामाण्यस्य स्मृतिशिष्टाचारयोरविशेषादगत्या परस्परविरोधस्थले "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाती" ति वत् विकल्पः आश्रयणीयः। अतः मातुलकन्याविवाहादीनां धर्मत्वमेवेति पूर्वपक्षे प्राप्ते समाधिरेवमभिधीयते—त्रैवर्णिकशिष्टप्रणीतानां स्मृतीनामसति श्रुतिविरोधेऽसति च लोभादिहेत्वन्तरदर्शने श्रुतिमूलकतया प्रामाण्यं स्मृत्यधिकरणविरोधाधिकरणाभ्यां निर्णीतम्। तत्र अष्टकाः कर्तव्याः" इति स्मृतिवाक्यात् "अष्टकाः कर्तव्या" इति अष्टकाविधायकं श्रुतिवाक्यमनुमीयते। आचारेभ्यः कथं कीदृशं श्रुतिवाक्यं मूलभूतमनुमीयत इति विचारणीयम्। न तावन्नित्यानुमेयश्रुतिकल्पका आचारा इति वक्तुं शक्यते; तथा सत्यन्धपरम्पराप्रसङ्गः। न चेदानीन्तनानामाचरितॄणां स्वाचाराणां मूलभूतं श्रुतिवाक्यं प्रत्यक्षमिति वक्तुं शक्यते, तथा सति साक्षात्श्रुत्यैव तदनुष्ठानं विहितमिति बहूनां तद्वाक्यस्य प्रत्यक्षतापत्तिः तेन आचारस्य प्रामाण्यं न सिद्ध्येत्। अतः अर्वाचीनैरेतादृशाचारानुष्ठातृभिः स्वाचाराणां प्रमाणभूता श्रुतिवाक्यं साक्षाद् दृष्टमिति वक्तुं न शक्यते। एवञ्चैतादृशाचाराणां प्रामाण्यायैवं वक्तव्यं भवति, स्मृतिकारैर्महर्षिभिरेतादृशाचाराणां मूलभूतानि श्रुतिवाक्यान्युपलभ्य स्मृत्वा शिष्याणामुपदिष्टम्। तैरन्येषामाचाराः प्रवर्तिताः, एवं परम्परया अद्य यावत्ते आचाराः प्रवर्तन्ते इत्याचाराणां शिष्टपरम्परासम्प्राप्तत्वेन प्रामाण्यमास्थेयम्। तेनाचाराणां स्मृतिकल्पनामुखेनैव श्रुतिकल्पकत्वेन प्रामाण्यमिति द्व्यन्तरितप्रामाण्यकत्वं सिद्ध्यति। एवञ्च श्रुतेः एकस्याः मूलतया स्मृतेः प्रामाण्यम् आचाराणाञ्च स्मृतेः श्रुतेश्च मूलतया प्रामाण्यमिति शीघ्रमन्थरगामित्वात् श्रुतिलिङ्गयोरिव बलाबलनिश्चयस्य वक्तव्यत्वात् स्मृत्याचारयोविरोध स्मृतेः प्राबल्यं युक्तम्। किञ्च स्मृतेरिदं वैशिष्ट्यं यत् "औदुम्बरी सर्वा वेष्टयितव्या" अष्टका कर्तव्या इति अनुष्ठेयतया कर्मणां विधानं स्मृतौ स्मर्यते। आचारात्तु कर्मस्वरूपमात्रमवगम्यते मन्त्रार्थवादवाक्येभ्यो यथा, अतः आचारात्तु कर्मस्वरूपमवगम्य विमर्शपूर्वकं लोभादिकारणान्तरसम्भावनाया विरहात् शिष्टपरिगृहीततया धर्मत्वेन तन्निश्चित्य कर्तव्यता कल्पयित्व्या। पश्चान्मूलकल्पनम्। एवञ्च स्मृतितः झटिति विहितकर्मणां कर्तव्यतायां प्रामाण्यबुद्धिः आचारात्तु अवगतकर्मणां कर्तव्यतायां प्रामाण्यबुद्धिर्विलम्बेनेति मातुलकन्याविवाहादीनां स्मृत्याऽधर्मत्वे निश्चिते तादृशाचारात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मृतिकल्पनमसम्भवमिति तादृशाचाराणां लोभादिमूलतया धर्मेऽप्रामाण्यमेवेति निश्चीयते। एवञ्चैतद्वर्णकेन स्मृत्याचारयोर्विरोधे स्मृतेरेव प्राबल्यमिति यावदाचारस्य मूलभूता श्रुतिः स्मृतिर्वा नोपलभ्यते तावत्तस्याचारस्याननुष्ठानमेव श्रेयः इति भट्टाचार्याणामाशयो ज्ञायते। तदुक्तं वार्त्तिके[1]–

**शूद्रान्नभोजनेनापि तुष्टन्त्यन्ये द्विजातयः।**
**स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति।।**
**अन्ये तु स्वव्यलीकेन मनसा तन्न कुर्वते।** इति।

इदमत्र विचारणीयम् अद्यत्वेऽपि दाक्षिणात्यैः मातुलकन्याविवाहः शिष्टाचारत्वेन स्वीकृतो दृश्यते, क्वचिद् धर्मसूत्रकारैरपि प्रामाण्यमस्य व्यवस्थापितम्, यथा आपस्तम्बाचार्यैरुक्तम् एवंविधाचारानुपक्रम्य इतर इतरस्मिन्न दुष्यति देशप्रामाण्यात् येषां परम्पराप्राप्ताः पूर्वजैरप्युनुष्ठिताः। त एव तैर्न दुष्यन्ति आचारैर्नेतरे जनाः।। अनेन ज्ञायते दाक्षिणात्यानां कृते मातुलकन्यापरिणयस्याभ्यनुज्ञेति। मनुवाक्यमपि सङ्गच्छतेऽत्र–

**येनास्य पितरो याता येन याताः पितामहाः।**
**तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति।।**[2] इति।

अतः अत्र मीमांसकानां सम्मतिरस्ति न वेति विचारः अवसरप्राप्तः। अत्र केचन न्यायसुधाकृत्स्मृतिचन्द्रिकाकारप्रभृतयः मन्यन्ते य आचारः प्रत्यक्षश्रुतिलिङ्गमूलकस्तस्य शिष्टस्मृतिविरोधेऽपि नाप्रामाण्यम्। मातुलकन्या-परिणयविषये पैतृष्वसेयीपरिणयविषये च मन्त्रलिङ्गं स्पष्टमुपलभ्यते। तथाहि ऋक्संहितायां दशममण्डले वैवस्वतयोः यमयम्योः संवादे श्रूयते–"गर्भे नु नौ जनिता दंपती कर्देव स्त्वष्टा सविता विश्वरूपः। नकिरस्य प्रमिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः"। इति। अस्य व्याख्यानं मीमांसाकौस्तुभे कृतं दृश्यते–अत्र वैवस्वतयोः यमयम्योः संवादः। "षष्ठ्ययुग्भिर्यमी मिथुनार्थं यमं प्रोवाच। स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे" इति शौनकस्मृतेः यम्याः स्वभ्रातरं यमं प्रत्युक्तिरिति गम्यते। "कः प्रजापतिः विश्वनिरूपको

1. मनुस्मृतौ 4-178
2. तन्त्रवार्तिक 1.3.5

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवः त्वष्टा सवनशीलः नौ आवयोर्गर्भे उदरे दम्पती जायापतिरूपे अपत्ये जनिता जनयिष्यति। इति। अतः मम पुरुषान्तरात् तव च स्त्र्यन्तरे जनयिष्यमाणयोस्तावत् स्त्रीपुंसयोर्दम्पतीत्वमवश्यम्भावि, तद्वरमावयोरेव दम्पतीत्वमस्तु इति यम्या वाक्ये भ्रातृभगिनीपुत्रयोर्दाम्पन्यं शास्त्रसम्मतवत्प्रतिपाद्य साक्षाद्भ्रातृभगिन्योरपि विवाहोऽस्त्विति यम्या उक्तिः श्रूयते। तदनु द्वादशे मन्त्रे यमेनोक्तम्–"न वा उ ते तन्वा तन्वं सं पपृच्यां पापमाहुर्य स्वसारं निगच्छात् इति। अतः यमवाक्येन स्पष्टं प्रतीयते भ्रातृभगिन्योर्विवाहः पापायार्थादधर्मायेति। अनेन यमयम्योः संवादे मन्त्रलिङ्गेनेदं सिद्धं भवति साक्षाद् भ्रातृभगिन्योर्विवाहोऽधर्माय भ्रातृभगिन्यपत्ययोर्विवाहस्तु शास्त्रसम्मत एवेति। एवमेव ऋग्वेदे शाकलसंहितायां खिलमन्त्रेऽपि "आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमं नो भागधेयं जुषस्व। तृप्ता जहुर्मातुलस्यैव योषा भागस्ते पैतृष्वस्रेयी वपामिव।।" इति मातुलकन्याविवाहं सिद्धवन्निरूप्यते।।
एवञ्च मातुलकन्यापरिणयविषये प्रत्यक्षश्रुतिलिङ्गस्य सद्भावान् मातुलकन्या-निषेधबोधकस्मृतिवाक्यस्य तद्विरोधेन श्रुतिकल्पकत्वाभावात् स्मृतेरेव दौर्बल्यमिति मातुलकन्याविवाहस्याधर्मत्वं न सिद्ध्यति। अत्र च भट्टाचार्या अपि प्रमाणम्। तन्त्रवार्तिके भट्टाचार्यैः श्रुतिस्मृत्योर्बलाबलाधिकरणे प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः प्रत्यक्षश्रौतलिङ्गसद्भावे उभयोरपि प्रामाण्यं व्यवस्थापितम्। तन्न्यायेनात्रापि स्मृत्याचारयोर्विरोधे आचारविषयकश्रौतलिङ्गसद्भावे उभयोः प्रामाण्यमेवेति मातुलकन्याविवाहस्याधर्मत्वं भट्टाचार्याणामपि न सम्मतमिति ज्ञायते। तथाहि–"स्मृतीनां श्रुतिमूलत्वे दृटे पूर्वं निरूपिते। विरोधे सत्यपि ज्ञातुं शक्यं मूलान्तरं कथम्।।" यच्चैतत् सर्ववेष्टनस्मरणं स्पर्शनश्रुतिविरुद्धत्वेनोदा-ह्रियते, एतज्जैमिनिनैव छान्दोग्यानुपादे शाटयनिब्राह्मणगतश्रुतिमूलत्वेन औदुम्बरीप्रकरणे च शाट्यायनिनां तामूर्ध्व देशेनोभयत्र वाससी दर्शयतीति "वैष्टुतं वै वासः श्रीर्वै वासः श्रीः सामे" इति दर्शिते तत्प्रसङ्गेनौदुम्बरीवेष्टन-वाससोऽपि प्रकाशश्रुतिमूलत्वमेवान्वाख्यातम्। ततश्च श्रुतिमूलत्वाद् बाध्योदाहरणं न तत्। विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः।।" इति वार्तिके प्रत्यक्षश्रुतिविरुद्धस्यापि स्मृतिवाक्यस्य श्रौतलिङ्गसद्भावे उभयोः समत्वात् नैकस्याप्यप्रामाण्यमपि तु कथञ्चिद्वाक्यार्थयोर्विकल्पेनानुष्ठानमिति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मातुलकन्यापरिणयविषये स्मृत्या निषेध्यत्वेनाप्रामाण्यं श्रौतलिङ्गसहकृत-शिष्टाचारेण प्रामाण्यं बोध्यत इति विरोधाद्विकल्पो यद्यपि न सम्भवति, क्रत्वर्थेषु स्पर्शनसर्ववेष्टनादिषु श्रुतिस्मृतिविरुद्धेष्वपि "यदि द्वित्राङ्गुलं मध्ये विमुच्योत्तरभागतः। वेष्टयेतौदुम्बरी तत्र किं नाम न कृतं भवेत् "इति वार्तिकोक्तदिशा श्रुत्यर्थाविरोधेन स्मृत्यर्थानुष्ठानसम्भवः, किन्तु प्रकृते न तथेति यद्यपि वैषम्यम् तथापि अगत्या "येषां परम्पराप्राप्तः पूर्वजैरप्यनुष्ठिताः त एव तैर्न दुष्यन्ति" इति नियममाश्रित्य मातुलकन्यापरिणयस्य धर्मत्वं श्रौतलिङ्गबलाद्वक्तुं युक्तम्। अथवा स्मृतिविरुद्धाचाराप्रामाण्योदाहरणं मातुलकन्यापरिणयमिति बहुषु स्थलेषु यद् दृश्यते तत्तद्धर्मत्वबोधकश्रुति-लिङ्गाभावं कृत्वाऽऽशङ्कयैव न तु वस्तुगत्येति मातुलकन्यापरिणयनिषेध-बोधकत्वेन प्रतीयमानानां स्मृतिवाम्क्यानां प्रकारान्तरेण व्याख्या कार्या। तच्च कौस्तुभे एवं प्रदर्शितम्। अतश्चानन्यगतिकानेकलिङ्गबलेन स्मृतिरेव पुत्रिकाकरणे आसुरादिविवाहेषु च दुहितुर्जामात्रे दानाभावेन स्वत्त्वनिवृत्त्यभावात् सापिण्डानिवृत्तेः" असपिण्डां यवीयसीम् इति सपिण्डोद्वाहनिषेधाप्रसक्तेस्त-द्विषयत्वेन व्याख्येया। अत एव "पैतृष्वसेयीं भगिनीं स्वस्त्रीयां मातुरेव च। मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेद्।। इति गमने प्रायश्चित्तमुक्तम्। "एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान्। ज्ञातित्वेनानुपेयास्ताः पतितो ह्युपयन्नरः।। इति पैतृष्वस्रेय्यादिपरिणयनिषेधे ज्ञातित्वमेव सापिड्याख्यं हेतुत्वेनोक्तम्।

किञ्च भगिनीत्वस्य पैतृष्वस्रेयीविशेषणत्वाभावे चतुष्ट्वापत्तेस्तिस्र इत्यस्यानुपपत्तिप्रसङ्गात्। पितृष्वसुः पुत्रिकारणे पुत्रः पुत्रिकैवेति" स्मृत्याः पुत्रिकायाः पुत्रत्वश्रणात् पुत्रिकाभ्रातुः पुत्रिकापुत्रं प्रति पितृव्यत्वापातात् पितृव्यदुहितुश्च भगिनीत्वप्रसिद्धेः भगिनीत्वविशेषणेन पुत्रिकायाः पितृष्वसुर्या दुहिता सा पैतृष्वस्रेयीति प्रतीयते। मातृभ्रातुश्च आप्तत्वविशेषणेन पुंत्रिकाया मातुर्यो भ्राता सपिण्डत्वेन आप्तः तस्य दुहितरं गत्वा इत्यर्थावगमेन मनोरपि पैतृष्वस्रेयीमातुलदुहितृपरिणयनिषेधः पुत्रिकाकरणविषय एवाभिप्रेतो लक्ष्यते। एवञ्च बौधायनस्यैतत्परिणये अनाचारत्वस्मृतिः "पितृसन्तति सप्तमान् मातृसन्ताने च पञ्चमादर्वाक् पुत्रिंकाकरणाभावमनिश्चित्य परिणयविषयेति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ज्ञेयम्।तेन ब्राह्मादिविवाहत्रये दुहितुर्दानविधानेन स्वत्वगोत्रयोरिव सापिण्ड्यस्यापि निवृत्तेस्तत्परिणयेऽपि न किञ्चिद् बाधकम्। न चैवं सति तादृशी मातृष्व-सृदुहितापि परिणेया स्यादिति वाच्यम्, तस्य लोकविद्विष्टत्वेनाप्रसक्तेः। अत एव "पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा।।" इति याज्ञवल्कीयमपि पुत्रिकाकरणादिविषय एवं व्याख्येयः। अथवा एतस्य सर्वविषयत्वेऽपि मातुलकन्यादीनां सत्यपि सापिण्ड्ये विशिष्य श्रुत्याभ्यनुज्ञानात्तदतिरिक्तविष-योऽयं 'असपिण्डां यवीयसीम्" इति निषेधः। अत एव तदूर्ध्वं चतुर्थपञ्च-मादिषु पुरुषान्तरेषु भ्रातृभगिन्योरिव मातृष्वसृदुहित्रादीनां चाविवाह्यतोपपत्तिः। एतावता कौस्तुभग्रन्थसन्दर्भेण मातुलकन्यापरिणयस्य धर्मत्वं युक्तमिति गम्यते। कौस्तुभकारैः मातुलकन्याविवहस्याधर्मत्वमित्येव सिद्धान्तः स्वीकृतः। तेषामयमाशयः मातुलकन्यापरिण्यविषये योऽयं श्रौतलिङ्गनुमितो विधिः कीदृशः? अर्थात् नियमविधिरुताभ्यनुज्ञाविधिरिति विचारणीयम्। नाद्यः नियमविधित्वेऽकरणे प्रत्यवायश्रवणं स्यान्नियामकम्, यथा" ऋतौ भार्यामुपेयाद्" इति विधेः "ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां पात्यते नात्र संशयः।। इति विधेयस्याकरणे प्रत्यवायः श्रूयते। प्रकृते तु मातुलकन्यापरिणयस्याकरणे निन्दायाः क्वचिदपि अश्रवणात्। न द्वितीयः, अभ्यनुज्ञाविधिपक्षे तस्य दोषाभावामात्रपरत्वेन रागप्राप्त्युपजीवित्वात् रागेण च सर्वदा सर्वस्य परिणयप्राप्त्यभावात् पाक्षिकानुवाद एव स्यात्। अन्यथा प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्" इत्यादावपि अभ्यनुज्ञाविधिकल्पनं स्यात्। किञ्च "गर्भे नु नौ जनिता दम्पती कः" इति श्रौतलिङ्गेन यमयमीसन्तानविषय एव विधिः कल्प्येत न तु मातुलकन्याविवाहादिविषये "मातुलस्य सुतामूढ्वा" इति निषेधस्य जागरूकत्वात्। एवञ्च मातुल-कन्याविवाहविषये श्रौतलिङ्गाद्विधिकल्पनानुपपत्तेः निषिद्धत्वादेव तद्विषयक-शिष्टाचाराणां धर्मे प्रामाण्यं नास्तीति मातुलकन्याया विवाहः पैतृस्वस्रेयी-विवाहश्चाधर्मायैवेति सिद्ध्यतीति। एवञ्च स्मृतिविरुद्धशिष्टाचाराणामप्रामाण्यम् एतद्विषये मातुलकन्यापरिणयस्यापि उदाहरणत्वं सङ्गच्छात एवेति आचार्याणां बहूनां मीमांसकानाञ्च मतम्। वार्तिककारैरिदमधिकरणं प्रकारान्तरेणापि व्याख्यातम्। तदत्राचार्यैः प्रदर्श्यते–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

**लौकिको वाक्यगो वार्थस्त्रिवृदादेः समत्वतः।**
**उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः॥19॥**

## प्रकाशिका

"त्रिवृद्बहिष्पवमानम् "आदित्यः प्रायणीयः पयसि चरुः'' इत्यादिवाक्येषु त्रिवृदादेः = त्रिवृत् चरुः इत्यादिशब्दानामर्थः लौकिकः =लोके व्यवहारे प्रसिद्धः, वाक्यगः = वाक्यसन्दर्भैः ज्ञातः, उभौ समत्वतः = उभयोः समत्वात् अर्थद्वयमपि ग्राह्यम् इति पूर्वपक्षे प्राप्ते विध्यर्थवादैक-वाक्यत्वात् अन्तिमः इहास्तु=विध्यर्थवादयोरेकवाक्यतया वाक्यगः एवार्थः ग्राह्य न तु लौकिक इति सिद्धान्तः।

अयमाशयः–"त्रिवृद् बहिष्पवमानम् इत्यत्र त्रिवृत् शब्दः श्रुतः तस्य लौकिकैः त्रिगुणत्ववाचकत्वं स्वीक्रियते यथा त्रिवृद्रज्जुरित्यत्र त्रिगुणितरज्जुबोधो भवति, वैदिकैस्तु" उपास्मै गायता नरः" इत्यादीनां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणाम् ऋक्त्रयात्मकेषु त्रिषु सूक्तेष्वव-स्थितानामृचां नवकं त्रिवद्बहिष्पवमानमित्यत्र त्रिवृत्शब्देन बोध्यत इति वाक्यशेषान्निर्णीयते। अत्र त्रिवृद्बहिष्पवमानमित्युक्ता "उपा स्मै गायता नरः इत्यादीनां स्तोत्रसाधनीभूतानामृचां श्रवणात् "नवभिः स्तुवन्ती" इति शाखान्तरे प्रत्यक्षं श्रूयते इति हेतोः त्रिवृच्छब्दः ऋचां नवकं बोधयतीति ज्ञायते। एवं लोके चरुशब्दः स्थालीवाचकः प्रसिद्धः, यथा चरुमग्नावधिश्रित्य तण्डुलानवपति" "चरुर्भिन्न" इति प्रयुज्यते। वेदे तु "आदित्यः पयसि चरुः प्रायणीयः" इति विधाय "आज्यस्यैनं चरुमभिरापूर्य चतुर आज्यभागान्य-जति। पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतो मध्येऽदितिमोदनेन' इति वाक्यशेषे अदितिदेवताकमोदनमिति श्रवणात् उपक्रमे विधावपि चरुशब्द ओदनपर इति निर्णीयते।

एवमाश्ववालशब्दः लोकेऽश्वस्य बाल इति व्युत्पत्त्याश्वपुच्छकेश-सङ्घाते प्रयुज्यते। वेदे तु "आश्ववालः प्रस्तरः" इति श्रावयित्वा "यज्ञो वै देवेभ्योऽश्वोभूत्वापाक्रामत्। सोऽपः प्राविशत्, स वालधौ गृहीतः। स

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वालान्मुक्त्वा विवेश।ते वाला: काशा अभवन्" इति श्रूयते। अत: विध्यर्थवादयोरेकवाक्यतया काशवाचकत्वमश्ववालस्य ज्ञायते। एवम् ऐक्षवी विधृती" इत्यत्र ऐक्षवी शब्द इक्षुसम्बन्धादिक्ष्ववयवपत्रादिवाचक: शाब्दिकव्युत्पत्त्या ज्ञायते वाक्यशेषात्तु काशपर इति वार्त्तिके समुदाहृतम्। एवमेव "ब्रह्मणस्तोम:" इत्यत्र स्तोमशब्द: समूहार्थको लोके प्रसिद्ध, वेदे तु "पञ्चदश: स्तोमो भवति" इति वाक्यशेषात् स्तोत्रीयसङ्ख्यापरत्वं निश्चीयते। अत्र सर्वत्र लोकवेदयो: शब्दार्थयो: विप्रतिपत्ते: समेषां विप्रतिपन्नानां शब्दानामुभयार्थत्वं स्वीकृत्योक्तस्थलेषु विकल्प एवाश्रयणीय उत वाक्यशोषा-न्निर्णीतेनैवार्थेन लोकप्रसिद्धार्थस्य बाध इति सन्देह:। पूर्वत्र बाधाबाधविचारस्य बलाबलविचारस्य च प्रवृत्तत्वादत्रापि तद्विशेष: विचार्यत इति सङ्गति:। एवं सन्देहे पूर्वपक्ष: वेदैकगम्ये धर्माधर्मविचारे वेदो यद्वदति तदेवं प्रमाणम्, शब्दार्थविचारस्तु लोकवेदसाधारण इति तद्विषये न वेदो लोकादतिरिच्यते। यत: "अर्थे श्रुत्यैकगम्ये हि श्रुतिमेवाद्रियामहे। मानान्तरावगम्ये तु तद्वशात्तद्व्यवस्थिति:।।[1] इति स्थिति:। शब्दानामर्थनिश्चयेऽर्थात् शक्तिग्रहे व्याकरणदीनां प्रामाण्यं सर्वै: स्वीक्रियत एव, तन्मध्ये वाक्यशेषोऽपि प्रमाणम् व्यवहारोऽपि प्रमाणम्, व्याकरणमपि प्रमाणमिति सम्मतमेव। उक्तञ्चा-भियुक्तै:—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यत: सिद्धपदस्य वृद्धा:।" इति व्यवहारपदेनात्र लोकवेदसाधारणो व्यवहारो गह्यते। अत: शब्दार्थनिर्णये लोकवेदयोर्विशेषाभावात् तुल्यबलयोर्विरोधे विकल्प इति न्यायेन त्रिवृदादिशब्दानामगत्योभयार्थत्वमिति पूर्वपक्ष:। न चानेकत्रैकस्य शक्तिकल्पनागौरवात् एकत्रैव शक्ति:, अर्थान्तरबोधस्तु लक्षणयेति स्वीकार्यमिति वाच्यम्, विनिगमनायां प्रमाणाभावात् वेदप्रसिद्धिरेव बलीयसी लोकप्रसिद्धिरेव बलीयसीति वा निश्चये विशेषाभावस्योक्तत्वात्। किञ्च यत्रार्थयो: सादृश्यं तत्र एकत्रैव शब्दस्य शक्तिरन्य तु सादृश्येन प्रयोग इति वक्तुं शक्यते, अत्र त्वर्थद्वयस्याप्यत्यन्त-वैलक्षण्येन सादृश्याभावात्तथा नोपपद्यते। अत: अनन्यथसिद्धप्रमाणद्वयबलेनो-भयोरपि वाच्यत्वावगमात् तुल्यबलत्वेन विकल्प एव युक्त:। एवञ्च त्रिवृद्बहिष्पवमानम्" इत्यत्रैका ऋक् त्रिगुणितेत्येक: तृच: कर्तव्यो लोकप्रसिद्धिग्रहणे स्तोत्रगतमृङ्नवकं ग्राह्यं वेदप्रसिद्धिग्रहणे इति यथेष्टं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विकल्पः, एवं चर्वादिशब्देष्वपीति युक्तमिति पूर्वपक्षे प्राप्ते सिद्धान्तः प्रतिपाद्यते "त्रिवृद् बहिष्पवमानम्" "आदित्यः प्रायणीयः पयसि चरुः" इत्यादिवैदिकप्रयोगेषु त्रिवृदादिशब्दानां वेदप्रसिद्ध्यैवार्थः निर्णेयः, न तु लोकप्रसिद्ध्या अन्यथा वाक्यशेषस्य वैय्यर्थ्यापत्तिः। वेदे "त्रिवृद्बहिष्पवमानम् इत्युक्त्वा "उपास्मै गायता नरः" इति नवर्चानुक्रमणं प्रत्यक्षम्। यद्यत्र त्रिवृत् शब्दस्य लौकिकोऽर्थ आश्रीयेत तर्हि विधिस्तुत्योर्भिन्नविषयत्वेन विध्यविषये स्तुत्यानर्थक्यं प्रसज्येत। अतः अत्र स्तुत्यानर्थक्यपरिहाराय वैदिक एवार्थः स्वीकार्यः यद्यप्यत्र साक्षात्स्तुतिर्नास्ति अपि तु "उपास्मै गायता नरः "इति नवर्चानुक्रमणमेव दृश्यते तथापि नवर्चानुक्रमणस्य "नवभिः स्तुवन्ति" इत्यस्य च तद्विधिमात्रार्थत्वे विध्युद्देशे त्रिवृच्छब्दोऽनुपपन्नः स्यादिति तदानुगुण्येनैव त्रिवृच्छब्दार्थो वर्णनीयः,अन्यथा त्रिवृच्छब्दस्य लोकप्रसिद्धर्थग्रहणे त्रिवृच्छब्देन ऋक्त्रयविधिः वाक्यशेषे तु नवर्चानुक्रमणम्, नवर्चविधिर्वा शाखान्तरे "नवभिः स्तुवन्ती ति वाक्येन बोध्यते इति परस्परं विरोधः स्यात्। अतः त्रिवृच्छब्दस्यार्थः वाक्यशेषानुरोधेन स्तोत्रीयमृङ्नवकमेव युक्तम्। न च प्रमाणाध्यायेऽत्र चतुर्थपादेऽन्तिमेऽधिकरणे "सन्दिग्धे तु वाक्यशेषात् "इति वाक्यशेषस्य प्रामाण्यं प्रतिपादयिष्यते एवेति तेनैव गतार्थमिदमधिकरणमिति वाच्यम् वाक्यशेषाधिकरणे हि "अक्ताः शर्करा उपदधाती" त्यत्र विध्युद्देशस्य द्रव्यद्रवमात्रसाध्यत्वात् "तेजो वै घृतम्" इति वाक्यशेषात् पूर्वमेव सन्देहः, तन्निवारणार्थं वाक्यशेषस्य प्रामाण्यं प्रतिपाद्यते, पकृते तु लोके त्रिवृच्छब्दस्य त्रैगुण्यवाचकत्वं प्रसिद्धमिति प्रबलविपरीतनिश्चयनिवर्तकत्वं न सम्भवतीत्यभ्यधिकाशङ्कानिवारणार्थं प्रवृत्तमिदमधिकरणम्। एवञ्च वाक्यशेषाधिकरणे सन्दिग्धार्थस्य निर्णयो वाक्यशेषाद्भवतीति प्रतिपादितम्, अत्र तु वाक्यशेषात्प्रागर्थान्तरमेव गृहीतं वाक्यशेषेण बाध्यते न तु प्रथमं सन्दिग्धं तेन निर्णीयते इति अधिकरणयोर्भेदः स्फुटः। ननु दशमे षष्ठपादे सप्तमेऽधिकरणे "त्रिवृदग्निष्टुदग्निष्टोमः" इत्यत्र त्रिवृच्छब्दः स्तोत्रीयनवकमेव बोधक इति वक्ष्यत एव, अतः तेनैवेदमधिकरणं गतार्थमिति वाच्यम्, उच्यते त्रिवृच्छब्दस्य वाक्यशेषबलात् स्तोत्रीयनवके रूढाविह निश्चितायां त्रिवृदग्निष्टोम इत्यादावसत्यपि वाक्यशेषे रूढिवशात्स्तोत्रीयनवकमेव ग्राह्यमित्येतदधिकरणप्रयोजनं तत्र वक्ष्यत इति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न पुनरुक्तिः। एवञ्चात्र न वाक्यशेषाधिकरणन्यायवद् वाक्यशेषान्न विशेषतात्पर्यमात्र निश्चयः किन्तु त्रिवृच्छब्दस्य स्तोत्रीयनवकलक्षणेऽर्थे शक्तिरेव वाक्यशेषानुगुण्येन कल्प्यते। कल्पितायां च तस्यां वाक्यशेषाभाव-स्थलेऽपि तस्या अनपायात् स्तोत्रीयनवके च शक्तेरविशेषात् त्रिवृदग्निष्टुदग्नि-ष्टोम इत्यत्र त्रिवृच्छब्दः स्तोत्रीयनवकपर एव इति निर्णयार्थं दाशमिकन्यायः प्रवृत्त इति न्यायत्रयमसङ्कीर्णम्।

एवं चरुशब्दोऽपि "आदित्यः पयसि चरुः प्रायणीयः" इति विधायः "आदितिमोदनेने" ति पश्चादनुवाददर्शनाद् वाक्यशेषनुगुण्येनोदनवाचक इति निश्चीयते। एवमनेकार्थत्वमन्याय्यमिति न्यायेन चरुशब्दस्य ओदन एव शक्तिः स्वीक्रियते, अन्यत्र च चरुशब्दप्रयोगः उपचारादिति सिद्ध्यति। याज्ञिकाश्च "अनवस्रावितान्तरुष्मपक्वौदने चरुशब्दमुपचरन्ति। अतः अस्मिन्नधिकरणे चरुशब्दस्य शक्तिरोदन एवेति निश्चिते दशमप्रथमे दशमेऽधिकरणे " तथा च लिङ्गदर्शनम्" इत्यत्र "सौर्यं चरुं निर्वपेदि-"ति वाक्ये वाक्यशेषाभावात् कथं चरुशब्दार्थनिर्णय इतिशङ्कासमाधानम् अत्रत्यवाक्यशेषस्य लिङ्गत्वेनोदाहृत्य कृतम्। तथाहि आदित्यः पयसि प्रायणीयश्चरुः" इत्यत्रैकत्रानुवादबलाच्चरुशब्दस्यौदनपरत्वे निश्चिते सति सर्वत्राप्योदनपरत्वस्यैवाश्रयितुमुचितत्वात् अन्यथानेकार्थत्वापत्तेः सौर्यञ्चरु-मित्यत्रापि चरुशब्दस्यौदनपरत्वमेव युक्तम्। ननु "चरुं भुङ्क्ते इत्यादौ चरुशब्दं स्थालीपक्व एवौदने प्रयुञ्जते, न तु शरावकटाहादिपक्वेऽपि, एवञ्चौदनस्य वाच्यत्वं वदद्भिरपि स्थाल्या विशेषणत्वमभ्युपेयम् ततश्च नाग्रहीतविशेषणा बुद्धिः विशेष्य मुपसङ्क्रामति" इति न्यायेन स्थाल्येव चारुशब्दवाच्या, ओदने तु क्वचिल्लक्षणयेति युक्तमिति चेद् उच्यते स्थालीपक्वेऽपि अनवस्रवितान्तरुष्मविशदपाकसिद्ध एवौदने चरुशब्दं प्रयुञ्जते, न त्वनेवंविधे, अतः स्थालीमन्तरेण च स पाको न निर्वर्तते इति कृत्वा स्थाल्यादरः। ततश्च कटाहादिपक्वे ओदने चरु शब्दव्यवहाराभावस्य पाकविशेषाभावेनान्यथासिद्धत्वात्तदनुसारेण स्थाल्या विशेषणत्वम्। अतः "नागृहीतविशेषणे-" ति न्यायस्याप्रसक्तेः चरुशब्दः स्थालीवाचको नास्त्यपि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तु शुद्धस्यौदनस्यैव वाचक: इत्येव युक्तम्। एवमेवाश्ववालशब्द: काशवाचक: "यज्ञो वै देवेभ्योऽश्वो भूत्वापाक्रामत्सोऽप: प्रविशत् स वालधौ गृहीत:, स वालान्मुक्त्वा विवेश ह। ते वाला: काशतां प्राप्ता: इति वाक्यशेषान्निर्णीयते तेन च "अश्ववाल: प्रस्तर" इत्यत्र काशमय: प्रस्तर: कार्य इति निर्णीयते। एवं स्तोमशब्दस्यापि स्तोत्रीयासङ्ख्याकृतस्तुतिसङ्ख्यावाचित्वं "त्रिवृदेव स्तोम:' "पञ्चदश स्तोम:" इति वैदिकसामानाधिकरण्यनिर्देशान्निश्चीयते। ब्राह्मणस्तोम वैश्यस्तोम:" इत्यादिलौकिकप्रयोगेषु समुदायबोधस्तु लक्षणयैवेति स्वीकारान्न दोष:। एवञ्च त्रिवृदादिशब्दानां लोके त्रिगुणितत्वाद्यर्थेषु रूढे: सत्वेऽपि तदर्थविषये सन्देहाभावेऽपि शास्त्रीयशब्दार्थनिर्णये वैदिकशब्दार्थनिर्णये वैदिकवाक्यशेषस्यैव प्राबल्यमिति वर्णकेऽत्र निर्णीयते इति युक्तम्। एवञ्च "शास्त्रस्था वा तन्निमित्तत्वात्" इति सूत्रे शास्त्रशब्दस्यार्थभेदविवक्षया वर्णकत्रयं भट्टाचार्यै: प्रदर्शितम्। तत्र प्रथमवर्णके शास्त्रशब्देन शास्त्रानुसारित्वादार्या विवक्षिता: मुक्तकानां नियमशून्यानां म्लेच्छानां व्यवहारापेक्षयाऽऽर्याणां शास्त्रानुवर्त्तिनां व्यवहारादेव शब्दानामर्थनिश्चयो युक्त इति निश्चीयते। द्वितीयवर्णके च शास्त्रशब्देन मन्वादिस्मृतय एव गृह्यन्तेऽनिबद्धाचारापेक्षया सुनिबद्धानां स्मृतिग्रन्थानामेव बलवत्त्वस्य युक्तत्वादिति निर्णीतम्। तृतीयवर्णके च शास्त्रशब्देन साक्षाद्वेद एव गृह्यते लौकिकंव्यवहारापेक्षया वैदिकवाक्यशेषस्यैव बलवत्त्वस्य युक्तत्वाल्लोकेऽन्यत्र शब्दानां शक्तिग्रहस्य सत्त्वेऽपि तद्वाधेन वेदे वाक्यशेषादेव शक्तिनिश्चयो युक्त इति निर्णीयते। एवञ्चात्र वर्णकान्तरानुधावने बीजमपि स्पष्टं भवति प्रथमवर्णके शास्त्रशब्दस्य गौणार्थत्वं स्वीकृतम्, मुख्ये सम्भवति गौणार्थग्रहो न युक्त इति न्यायेन द्वितीयवर्णके शास्त्रशब्दस्य गौणार्थं विहाय मुख्यार्थो गृह्यते, तत्रापि, स्मृतीनामपेक्षया शस्त्रशब्दस्य वेदवाचकत्वमेव युक्ततरमिति तृतीयवर्णके शास्त्रशब्देन वेद एव गृह्यते इति शास्त्रशब्दस्य वेदार्थत्वं स्वीकृत्यान्तिमं वर्णकं प्रवृत्तम्। तदुक्तं वार्त्तिके न चात्र ''सन्दिग्धेषु वाक्यशेषात्" इत्येतेन तुल्यार्थत्वम् प्रतिपत्तिद्वयस्याप्यसन्दिग्धत्वात्। लौकिकी प्रतिपत्तिर्हि स्वार्थे नि:संशया स्थिता। वैदिक्यपि तथा स्वार्थे बाधतेऽतो विपर्ययात्।। तस्मात् शास्त्रस्थितैवैका प्रतिपत्तिर्बलीयसी। न समा मुक्तकाचारैर्विप्रकृष्टै: ससङ्करै:।। इति।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमाचार्यैः भाष्यकारीयमेकं वर्णकम्, वार्त्तिककाराणां वर्णकत्रय-मित्याहत्य चतुर्भिर्वर्णकैरिदं यववराहाधिकरणं व्याख्यातम्।

सम्प्रति षष्ठाधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**कल्प्यः पिकादिशब्दार्थो ग्राह्यो वा म्लेच्छरुढितः।**
**कल्प्यः ह्यार्येष्वसिद्धत्वादनार्याणामनादरात्॥20॥**

**ग्राह्या म्लेच्छप्रसिद्धिस्तु विरोधादर्शने सति।**
**पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः॥21॥**

**प्रकाशिका**

पिकादिशब्दार्थः "पिकमालभते" "प्र नेमस्मिन् ददृशे" "सते हिरण्यं निधाय इत्यादिश्रुतिवाक्येषु श्रुतानां पिकादिशब्दानामर्थः, कल्प्यः व्याकरणनियममाश्रित्य प्रकृतिप्रत्ययाभ्यां व्युत्पन्नः कश्चनार्थः कल्पितः स्वीकार्यः, म्लेच्छरूढितः =म्लेच्छानां व्यवहारे पिकशब्दार्थः कोकिले रूढः, नेमशब्दश्च अर्धवाचकत्वेन रूढः शतच्छिद्रदारुमये पात्रे रुढश्च सतशब्दः, ग्राह्यः = म्लेच्छव्यवहार उक्तशब्दानां यथार्थः स्वीक्रियते तथैवोक्तवेदवाक्येष्वपि तेषामर्थाः स्वीकार्या वेति संशये, ह्यार्येष्वसिद्धत्वाद् = उक्तशब्दनामार्य-व्यवहारेऽश्रुतत्वाद्, अनार्याणामनादरात्= पूर्वस्मिन्नधिकरणे "शास्त्रस्था वा तन्निमित्तत्वान्" इति वैदिकशब्दार्थनिर्णय वैदिकानामेव व्यवहारस्य बलवत्त्वप्रतिपादनेन म्लेच्छव्यवहारस्य दुर्बलत्वप्रतिपादनेनानादरस्य दर्शनात् कल्प्यः धातुप्रत्ययादिकल्पनयार्थो निर्णेय इति पूर्वपक्षे प्राप्ते–विरोधादर्शने सति = म्लेच्छव्यवहारेषु उक्तशब्दानां येऽर्था प्रसिद्धास्तेषामार्यव्यवहारेषु विरोधाभावान् म्लेच्छप्रसिद्धिस्तु ग्राह्या = यथाम्लेच्छव्यवहारस्तथैव पूर्वोक्तश्रुति-वाक्येष्वप्युक्तशब्दानामर्थो निर्णेयः, ततः पिकनेमादिशब्दानां कोकिलाद्यर्थता युक्तेति सिद्धान्तः।

अयं भावः–पूर्वाधिकरणे हि आर्यम्लेच्छप्रसिद्ध्योर्विरोधे म्लेच्छप्रसिद्धेरप्रामाण्यमुक्तमिदानीमसति विरोधे म्लेच्छप्रसिद्धेः प्रामाण्यं सम्भवति न वेति विचार्यते। पूर्वत्र शिष्टाकोपाधिकरणे शिष्टाचाराणां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रामाण्यमुक्तम्, तेनैवाशिष्टानामाचाराणामप्रामाण्यमुक्तप्रायम् शब्दार्थव्यवहारे चार्यम्लेच्छयोर्विरोधे आर्याणामेव प्रामाण्यं यववराहाधिकरणे निर्णीतम्। अत्र पिकनेमसततामरसादिशब्दानामार्यव्यवहारेऽश्रुतानां वेदवाक्येषु स्थितानामर्थनिर्णय: कथं कार्यम् इति जिज्ञासायां निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थ: कल्पयितव्य: उत तेषां यत्र पिककोकिलार्धपद्माद्यर्थेषु क्रमश उक्तशब्दान् म्लेच्छा अशिष्टा: प्रयुञ्जते, त एव तेषामर्था इति वैदिककर्मसु ग्राह्या इति विशये प्राप्ते व्याकरणस्य प्रामाण्यस्यार्थवत्तायाश्चाग्रे प्रतिपादयिष्यमाण-त्वादत्रार्धजरतीयन्यायस्य कल्पनापेक्षया एकत्र शब्दार्थव्यवहारे म्लेच्छानां प्रामाण्ये निषिद्धे सर्वत्रापि आर्यव्यवहारविरोधाभावेऽपि अप्रामाण्यं युक्तम्, अत: निगमनिरुक्तिव्याकरणवशेनैव धातुतोऽर्थ: कल्पनीय इति पूर्वपक्ष:। सिद्धान्तस्तु शब्दार्थसम्बन्धस्य नित्यत्वस्यौपत्तिकाधिकरणे साधितत्वात्, उक्ता: शब्दा: नित्यवेदे श्रुता इति तेषमर्थानामपि नित्यत्वात् क्वचिदर्थेषु तेषां शक्ति: स्वीकार्या एव। न च निरुक्तनिगमव्याकरणादिवशेन प्रकृतिप्रत्ययादिकल्पनया धातुतोऽर्थकल्पनोचिता, प्रकृतिप्रत्ययादिकल्पनाया बहुप्रकारत्वसम्भवेन ततो नियतस्य कस्यचिदर्थ- स्यालाभात्।" सृण्येव जर्भरी" इत्यादौ त्वगत्या व्याकरणादीनां शरणम्। पिकादिशब्दानां विषये तु म्लेच्छव्यवहारे उक्तशब्दानामर्था: प्रसिद्धा इति निगमनिरुक्तव्याकरणादिभिर-व्यवस्थितार्थकल्पना नोचिता। यत्र म्लेच्छव्यवहारादपि शब्दार्थो नावगतस्तत्र व्याकरणादीनामर्थवत्ता युक्तैव। शब्दान्तरेषु म्लेच्छव्यवहारस्य वाचकत्व-निर्णयेऽसमर्थस्यापि "पिकमालभेत" "सोमापौष्णं चरुं। निर्वपेन्नेमपिष्टं पशुकाम'' इत्यादिवैदिकचोदनासु पिकादिशब्दानां प्रयुक्तत्वेनाविभक्तिक-प्रयोगादपि प्रातिपदिकमात्रस्याविप्लुतिनिश्चयान्नित्यवेदप्रयुक्तत्वेन जात्यादिरूपनित्यार्थवाचंकत्वकल्पनावश्यंभावे सति आर्यव्यवहारेषूक्तशब्दानाम-श्रुतत्वान्मुख्यार्थान्तराप्रसिद्ध्या तत्सदृशे कोकिलादौ गौणत्वायोगात् स्वसमानार्थककोकिलादिशब्दसादृश्याच्च गाव्यादिशब्दवत्तन्मूलकस्य शक्तिभ्रमस्याप्यसम्भवेनार्थस्याप्यविप्लुतिनिश्चद् वाचाकत्वनिर्णये सामर्थ्यं युक्तमेव। अत: म्लेच्छव्यवहारस्यापि आर्यव्यवहारविरोधाभावे प्रामाण्यं युक्तमेव। तथा च म्लेच्छव्यवहारादेवात्र सन्धिग्धशब्दानामर्थनिर्णय: कार्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति सिद्धान्तः। तदुक्तं भाष्ये–"चोदितमशिष्टैरपि शिष्टानवगतं यत् प्रमाणेनाविरुद्धम् तदवगम्यमानं न न्याय्यं वक्तुम्।" इति। एवञ्च यथा वेदे पशवयवाः लोमादयो विहिताः वैदिकैर्न ज्ञाताः, म्लेच्छाश्च नित्यं प्राणिवधादिकर्मस्वभियुक्ताः, तेभ्य एव ज्ञात्वा विनियुज्यते। निषादेष्ट्यामपि कूटं दक्षिणेति विहितम्, तत्र य एवैतेन व्यवहरन्ति तेभ्य एवार्थतत्त्वं ज्ञात्वा दक्षिणात्वेन द्रव्यान्तरमिश्रितं हिरण्यं विनियुज्यते, तथा प्रकृते पिकनेमतामरसादिशब्दानामर्थनिश्चयो म्लेच्छव्यवहारादेव युक्त इति सिद्धान्तः। एवञ्च शिष्टाकोपाधिकरणे प्रमाणबलाबलात् प्रमेयबलाबलं ज्याय इति न्यायेनाचमनस्मृत्या श्रौतस्यापि क्रमस्य बाधो युक्त इति निर्णीतमिह तु आश्रयबलाबलात्स्वरूपबलाबलं ज्याय इति न्यायेनासति विरोधे म्लेच्छव्यवहारादपि शक्तिनिर्णयो युक्त इति निर्णीयते। काल्पनिक्याः प्रसिद्धेश्च या क्लृप्ता बलीयसी इति न्यायेन निगमनिरुक्तव्याकरणैरर्थकल्पनापेक्षया म्लेच्छव्यवहारादपि क्लृप्तार्थः स्वीकार्यः स्वरूपतः प्राबल्यादित्यपि न्यायोऽत्र सिद्ध्यति। एवञ्चाधिकरणाभ्यां ययोर्बाध्यबाधकभावो विचार्यते तत्स्वरूपगतं बलाबलं तत्सम्बन्ध्यन्यगतबलाबलापेक्षया ज्यायः, स्वरूपापेक्षयान्यस्य बहिरङ्गत्वादित्येव सिद्धं न्यायशरीरम्, तच्चान्यत् क्वचित् प्रमाणम् शिष्टाकोपाधिकरणे विचारितम् क्वचिदाश्रयोऽत्र विचार्य निर्णीयते इति अधिकरणयोर्भेदोऽपि स्फुटो भाष्यकारमते। वार्त्तिककारमते तु प्रमेयबलाबल-ज्यायस्त्वस्य पूर्वमनिरूपितत्वादत्रैव आश्रयगतबलाबलापेक्षया प्रमेयबलाबलस्य स्वरूपगतत्वेनान्तरङ्गत्वाज्ज्यायस्त्वमुच्यते।

गुरुमतेनेदमधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**अर्थाबोधादप्रमाणं पिकालम्भनचोदना।**
**मैवं म्लेच्छप्रसिद्ध्यापि तद्बोधादविरुद्धया॥22॥**

**प्रकाशिका**

पिकालम्भनचोदना = "पिकमालभेत" इति विधिवाक्यमप्रमाणमर्था-बोधाद् = आर्यव्यवहारेष्वप्रसिद्धतयार्थनिश्चयाभावादिति पूर्वपक्षे प्राप्ते मैवं= एवं न युक्तम् इति सिद्धान्तः, अविरुद्धया म्लेच्छप्रसिद्ध्यापि तद्बोधाद् =

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आर्यव्यवहारेण सह विरोधेऽसति म्लेच्छव्यवहारे पिकादिशब्दानां प्रसिद्धेस्सत्वात्तत एवार्थनिश्चयो युक्त इति हेतुः। अयमाशयः—पूर्वाधिकरणे यववराहादिशब्दानां वेदोपबृंहितादार्यव्यवहारादर्थावधारणं निर्णीतम् तेनानार्यव्यवहारो गौणः नार्थनिश्चायकः इति सिद्धम्, अतः यत्र पिकादिशब्देषु आर्याणं प्रयोग एव नास्ति, म्लेच्छानामेव पिकादिशब्दानां कोकिलाद्यर्थेषु प्रयोगो दृश्यते, तत्पदवतीषु चोदनासु अबोधलक्षणमप्रामाण्यमिति पूर्वपक्षे प्राप्ते सिद्धन्तो निरूप्यते—यवादिशब्दानां म्लेच्छप्रयोगादर्थनिश्चये आर्यप्रयोगेण बाध इति वेदोपबृंहितादार्यव्यवहारादेवार्थनिश्चयः कार्य इति पूर्वत्र निर्णीतम्। अत्र तु पिकादिशब्दानामार्यव्यवहारेऽदर्शनात् बाधाभावान् म्लेच्छव्यवंहारा-देवार्थाध्यवसायसम्भवादज्ञातार्थबोधकत्वेन पिकादिपदघटितचोदनानां प्रामाण्यं सङ्गच्छात एव। न च निगमादिवशेनैव पिकादिशब्दानामर्थोहनसम्भवात् निगमादीनाञ्च वेदाङ्गत्वात् पूर्वाधिकरणन्याय एवात्रादरणीय इति वाच्यम्ः, निगमादिनानेकार्थोहनसम्भवात् तात्पर्यानवधारणान्नार्थनिश्चयः सम्भवति, अथापि कथञ्चिद्दध्यवसायस्यसम्भवः तथापि तस्य मूलापेक्षत्वमावश्यकमिति तदपेक्षायां दृष्टस्यार्थाभिधानसमर्थस्य म्लेच्छप्रयोगस्यैवानुसरणमुचितम् न पुनः तदतिक्रमेणा-दृष्टं प्रयोगान्तरं कल्पयितुं युक्तम् तदनु तदुचितप्रकृतिप्रत्ययकल्पनोचिता। यत्र तु "सृण्येव जर्भरी तुर्फरीत, नैताशेव तुर्फरी पर्फरीका। उदन्यजेव जेमना मदेरू ता मे जराय्यजरं मरायु।।" इति संहितायां भूतांशकाश्यपदृष्टे ऋङ्मन्त्रे जर्भरीतुर्फर्यादिशब्दाः न कुत्रापि लौकिकप्रयोगेऽश्रुताःश्रूयन्ते तद्विषये निगमादिनैवार्थकल्पनेति युक्तमर्थवत्त्वं तेषाम्। एवञ्चानार्यव्यवहारादेव पिकाद्यर्थाध्यवसायात्पिकमालभेतेत्यादिचोदनानामज्ञातार्थबोधकत्वेन प्रामाण्यं सिद्ध्यति।

सप्तमाधिकरणं निरूप्यते—

**जैमिनीयन्यायमाला**

**अपौरुषेयाः कल्पाद्याः कृत्रिमा वा न कृत्रिमाः।**
**श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो मात्वं यतः समम्।।23।।**

**पुंनामोक्तेः पौरुषेयाः काठकाद्यसमत्वतः।**
**तत्रोपलेभिरे केचिदापस्तम्बादिकर्तृताम्।।24।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

**कल्पाद्याः**– निगमनिरुक्तषडङ्गग्रन्थाः मन्वादिस्मृतयश्च अपौरुषेयाः कृत्रिमा वेति सन्देहे न कृतिमाः=केनचित्कृता अर्थात् पौरुषेया न सन्तीति पूर्वपक्षः। यतः धर्मबुद्धेः धर्मावबोधस्य कृते, श्रुतिस्मृत्योः = वेदस्य निगमादीनाञ्च समम् = समानरूपेण मात्वं= प्रामाण्यं स्वत एव, इति पूर्वपक्षे प्राप्ते पौरुषेयाः पुंनामोक्तेः = तत्तत्पुरुषकृतत्वेन प्रसिद्धेः निगमादिग्रन्थाः पौरुषेया एवेतिसिद्धान्तः। काठकाद्यसमत्वतः= काठकशाखा, शाकलशाखा इत्येवमपौरुषेत्वेन निर्णीते वेदऽपि श्रूयते कल्पसूत्रेष्वपि श्रूयते, अतः उभयोः सममपौरुषेयत्वं युक्तमिति शङ्कायामुच्यते,वेदे तु प्रवचनं कठादिमहर्षीणां निमित्तीकृत्य तत्तच्छाखाभेदानां प्रवृत्तिर्युक्ता, कल्पसूत्रेषु तु तथा वक्तुं न शक्यते, यतस्तत्र केचिदापस्तम्बादिकर्त्तृतामुपलेभिरे = केचन स्मृतिकारा "एवापस्तम्बेनोक्तम्, एवं बोधायनेनोक्तम्" इति तेषां कल्पसूत्राणा एते एते कर्तार इति स्मरन्ति, अतः कल्पादिग्रन्थानां पौरुषेयत्वमेव युक्तमिति सिद्धान्तः।

अयमाशयः–अत्र भाष्ये "इह कल्पसूत्राण्युदाहरणम्" इत्यारभ्य" तेन श्रुतिविरुद्धवचनान्न सत्यवाचः, तस्मादप्रमाणम्" इत्यन्तं वाक्यनिवहैः वेदविरुद्धकल्पसूत्रवचनानामप्रामाण्यं कण्ठतः प्रतिपादितमिति प्रतीयते, एतच्च स्मृत्यधिकरणविरोधाधिकरणाभ्यां गतार्थम्। अतः वार्तिककारैः कल्पादीनां स्वतः प्रामाण्यमुत वेदमूलतयेति विचारपरतयेदमधिकरणं व्याख्यातम्। अतः अत्र चतुर्धा विप्रतिपत्तयः-कल्पसूत्राणां स्वतः प्रामाण्यमस्ति न वा? मन्वादिवचनानां समेषां विद्यास्थानानामेव प्रामाण्यं स्वत उतापौरुषेय-वेदमूलतयेति। "षडङ्गमेके" इति वेदाङ्गानामपि वेदत्वस्मरणात्तेषामेव प्रामाण्यं स्वत उत वेदमूलतयैवेति। शाक्यादिग्रस्थानां श्रुमूलत्वाभावेऽपि वेदवत्स्वा-तन्त्र्येणैव प्रामाण्यमस्ति न वेति। पूर्वाधिकरणे पिकादिशब्दार्थनिर्णये म्लेच्छप्रसिद्धेः स्वातन्त्र्येण प्रामाण्यं साधितम् अतः तन्न्यायेनामीषामपि स्वातन्त्र्येण प्रामाण्यमित्युत्थानात्सङ्गतिः। प्रथमं कल्पसूत्राणां स्वतः प्रामाण्यमस्ति न वेति विचार्यते। अत्र प्रयोगकल्पनात्कल्प इति व्युत्पत्त्या यागादीनां प्रयोगनिरूपणपरा बोधायनमशकादिप्रणीता ग्रन्था: कल्पा इत्युच्यन्ते,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रयोगसूचनात् सूत्रमिति व्युत्पत्त्या संज्ञापरिभाषाभिः व्याख्यानापेक्षा आश्वलायनकात्यायनादिभिः प्रणीता ग्रन्था उच्यन्ते। तदुक्तम्-"सिद्धरूपप्रयोगा यैः कर्मणामनुगम्यते। ते कल्पा लक्षणार्थनि सूत्राणीति प्रचक्षते। कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम्।। सूत्रन्तु सूचनात्तेषा स्वयं कल्प्यप्रयोजकम्। कल्पाः पठितसिद्धा हि प्रयोगाणां प्रतिक्रतु।। बोधायनीयवाराहमाशकादिप्रबन्धवत्। स्वसंज्ञापरिभाषाभिर्यदुत्सर्गापवादनम्।। हेतुदृष्टान्तवत्सूत्रं तल्लक्ष्यव्यापि लक्षणम्। आश्वलायनकं सूत्रं वैजवापिकृतन्तथा। द्राह्यायणीयलाटीयकात्यायनकृतानि च।। इति मन्वादिस्मृतिग्रन्थेभ्य एतेषां ग्रन्थानामयं विशेषः अत्र ग्रन्थेषु सकलजनप्रत्यक्षवेदवाक्यविषयभूता एवार्थाः प्रायेण दृश्यन्ते न तु स्मृतिग्रन्थेष्विवान्तर्हितविप्रकीर्णानुमेयप्रायश्रुतिमूला विषया दृश्यन्ते। तद्यथा "प्राचीनवंशं करोति" इदं वाक्यमध्यापकपरम्परया वेदे प्रत्यक्षमेव कल्पसूत्रग्रन्थेषूपलभ्यते। अतः स्मृतिग्रन्थेभ्यः कल्पसूत्रग्रन्थानां वैशिष्ट्यं स्पष्टम्। पूर्वत्र स्मृत्यधिकरणे स्मृतीनां वैदिकमन्वादिप्रणीतत्त्वेन प्रामाण्यमुपपादितम्, तत्र स्मृतीनां प्रामाण्ये वेदमूलत्वं हेतुत्वेन स्वीकृतम्, वेदोक्तार्थस्यैव स्मृतौ प्रतिपादितत्वेनाज्ञातार्थबोधकत्वाभावात् कथं प्रामाण्यमित्याशङ्कायां पुनः नानाशाखागतविप्रकीर्णार्थसङ्क्षेपेणानधिगतार्थबोधकत्वमवैय्यर्थ्यञ्चोक्ते। कल्पसूत्रेष्वेवं स्थितिर्नास्ति, कल्पसूत्रेषु प्रायः प्रत्यक्षवेदवाक्यान्येव दृश्यन्ते, अतः वेदमूलत्वेन स्मृत्यधिकरणन्यायेन प्रामाण्यमत्र साधयितुं न शक्यतेऽज्ञातार्थबोधकत्वाभावात्। प्रामाण्यञ्चैतेषां सर्वैरपि वैदिकैः स्वीकृतमेव। अतः शाखान्तरवदपौरुषेयत्वेनैव प्रामाण्यं वक्तव्यम्। न च कल्पसूत्राणां प्रामाण्यमपौरुषेयत्वेन चेत् "बोधायनीयम्" "आपस्तम्बीयम्" इत्यादि- समाख्याविरोध इति वाच्यम्; "आख्या प्रवचनाद्" इति न्यायेन प्रवचनातिशयात् "काठकम्" शाकलम्" "बाष्कलम्" "तैत्तिरीयम्" इति यथा वेदेषु शाखाभेदः प्रसिद्धस्तथैव कल्पसूत्रेष्वपीति वक्तुं शक्यत्वात्। अत एव कल्पसूत्राणां "अहरहः स्वाध्यायमधीयीत" इत्युक्त्वा "यदृचोऽधीते, यत्सामानि, यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान्" इति तैत्तिरीयारण्यके नित्यब्रह्मयज्ञविधिविषयत्वेन श्रवणमपि उपपद्यते।न च प्रवाहनित्यत्वकल्पनया तदुपपत्तिः तत्कल्पनस्य गौरवग्रस्तत्वेनाप्रामाणिकत्वात्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवञ्च पौरुषेयत्वे कल्पसूत्राणामनित्यतया नित्यविधिविषयत्वं न घटत इत्यन्यथानुपपत्त्यापौरुषेयत्वेन नित्यतया स्वतः प्रामाण्यं युक्तमिति पूर्वपक्षः। द्वितीयपूर्वपक्षस्तु वेदाङ्गानां तु कल्पसूत्रेभ्योऽपि विशेषः स्मर्यते, "मन्त्रब्राह्मणयोर्वेदनामधेयम् षडङ्गमेके" इति गौतमस्मृतौ वेदाङ्गानामपि वेदत्वोक्तेः अङ्गिवदङ्गस्यापि नित्यत्वस्यार्थज्ञानार्थमध्ययनं कार्यमिति बोधकेनाध्ययनविधिनैव सिद्धेश्च तेषां स्वतः प्रामाण्यमेव युक्तमिति न केवलं कल्पसूत्राणां षडङ्गमध्ये पठितानां स्वतः प्रामाण्यमपितु सर्वेषां वेदाङ्गानां शिक्षादीनामपि नित्यापौरुषेयतया स्वतः प्रामाण्यमिति।

तृतीयपूर्वपक्षस्तु कल्पसूत्राणां सर्वत्र प्रत्यक्षपठितवेदार्थोपनिबन्धनेन वेदमूलत्वासम्भवेन शाखाभेदवद्वेदत्वेनैव प्रामाण्योपपादानं सर्वत्र न सङ्गच्छते; "अङ्गं वा समभिव्याहारादि 'त्यादिकल्पसूत्रेषु प्रत्यक्षवेदेष्वश्रुतस्यापि स्मरणात् वेदमूलत्वेनैव प्रामाण्यसम्भवात्। अतः "अङ्गानि वेदाश्चत्वारो मीमांसान्याय-विस्तरः। धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश।" इत्यादौ श्रुतं सकलं विद्यास्थानमेवात्रोदाहरणम्। वैदिकैस्त्रैवर्णिकैः शिष्टैः समेषां विद्यास्थानानां प्रामाण्यमभ्युपेतमिति प्रामाण्य अवश्यं वक्तव्ये वेदमूलत्वेनोपपादने एतेषां कर्ता पुरुषः तस्य मूलप्रमाणं वेदः तस्य च नित्यत्वमिति त्रितयं कल्प्यम्, तद्वरमपौरुषेयत्वमेव नित्यत्वेन प्रामाण्योपपादनं युक्तं लाघवात्। यदि पुनः "अङ्गानि वेदाश्चत्वार इत्यत्र वेदेभ्यः पृथक्तया विद्यास्थानान्तराणां ग्रहणात्कथं सर्वेषां वेदत्वमित्याशङ्क्यते चेत् सर्वेषां वेदत्वेन प्रामाण्यमिति न कथ्यत अपितु वेदतुल्यतया पौरुषेयत्वेन निरस्तसकलपुंदूषणतया नित्यत्वेनैव प्रामाण्यमिति सर्वथा समेषां विद्यास्थानानां स्वतः प्रामाण्यमिति।

चतुर्थपूर्वपक्षस्तु एवं पूर्वोक्तप्रकारेण प्रामाण्यं प्रति वेदमूलत्व-स्यानपेक्षत्वात् शाक्यागमानामपि प्रामाण्यमपौरुषेयतया भवत्विति। यद्यपि चोदनासूत्र एव बौद्धागमानां प्रामाण्यं धर्मे निरस्तम्, तथापि तत्र पुरुषकृतत्वमभ्युपेत्यैव तत्साधितम्, इह तु "वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। वेदाध्ययनसामान्यादधुनाध्ययनं यथा" इतिवद् बौद्धाद्यध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। बौद्धाध्ययनसामान्यादधुनाध्ययनं यथा।। इति अनादित्वमभ्युपगमेन निरस्तपुंदूषणतया स्वतः प्रामाण्यं सङ्गच्छते इति च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चोदनासूत्रेण न विरोध:। एवं चतुर्धा पूर्वपक्षेषु प्राप्तेषु क्रमश: समाधिरभिधीयते। कल्पसूत्राणां षडङ्गानां सकलविद्याप्रस्थानानां बौद्धागमानानां वा वेदवत्स्वत: प्रामाण्यं कथमपि न सङ्गच्छते इति। बौद्धागमानान्तु प्रामाण्यमेव न सङ्गच्छते स्वत:प्रामाण्यन्तु दूरापास्तम्। अत: पूर्वं बौद्धागमानां निरस्तप्रमाणभावानां सम्भाविताक्षेपनिरासपूर्वकं पुन: प्रामाण्यं निराक्रियते–तदित्थम् कथं बौद्धै: स्वत: प्रामाण्यं तेषामागमानां वक्तुं शक्यत इति विचारणीयम्। अपौरुषेयत्वमात्रेणैव स्वत: प्रामाण्यं वक्तुं न युक्तम्। अपौरुषेयस्यापि क्षणिकस्य क्षणिकत्वादेव प्रामाण्यप्रयोजकत्वानुपपत्ते:। अत: यथास्माभिरुच्यते नित्यतया निरस्तसमस्तपुंदूषणतया स्वत: प्रामाण्यं वक्तव्यम् तथासति यदेव भवतां गोत्रं तदेवास्तु ममापि च इति न्यायावतारप्रसङ्ग:। यथैव जामातृश्वशुरयोरेकगोत्रत्वे विवाहानुपपत्तिस्तथैव नित्यमपौरुषेयं धर्माधर्मयो: प्रमाणभूतं किमपि स्वीक्रियते चेत् सर्वं क्षाणिकमिति स्वकपोलकल्पितमतस्य तिलाञ्जलि: स्यात्। किञ्च दृढकर्तृस्मृतेस्तेषामपौरुषेयत्वं वक्तुमपि न शक्यते। बौद्धाद्यध्ययनं सर्वमित्यनुमाने च बौद्धपदेनैव बौद्धं बुद्धकृतमिति व्युत्पत्त्या बुद्धकर्तृकत्वावगमात् तेषामपौरुषेयत्वं न सिद्ध्यति। किञ्च न वयं व्यसनितया वेदस्यापौरुषेयत्वं ब्रूम: किन्तु वेदस्वरूपादेवापौरुषेयत्वं सिद्ध्यतीति वदाम:। यत: आकुमारीत: आहिमाचलं यावत् नियतस्वरानु-पूर्वीक्रमवन्तो वर्णा वेदपदवाच्या वैदिकैरवश्यस्मर्तव्यकर्तृस्मरणमन्तरा नित्यमधीयमाना दृश्यन्ते, नैवं कस्याप्यागमस्याध्ययनं दृश्यते स्मर्यते वा अत: वेदानामपौरुषेयत्वम् तद्भिन्नानामागमानां तत्तत्कर्तृकृतत्वमिति निश्चप्रचम्। तदुक्तं भट्टाचार्यै:- "प्रपाठकचतु:षष्ठिनियतस्वरकै: पदै:। लोकेष्वप्यश्रुतप्रायैर्ऋग्वेदं क: करिष्यति। अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातममित्येतन्नृवच: कथम्।। किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिचच्छन्दमीदृशम्। रचयेत् पुरुषो वाक्यं किञ्चोद्दिश्य प्रयोजनम्।। अग्ने: पुरोहितत्वं च क्व दृष्टं केन कीर्त्यते। ईळे शब्दप्रयोगश्च क्व दृष्टस्स्तोत्रगोचर:। देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम्। विधिनैव हि देवत्वं प्रतिकर्मावधार्यते। न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम्। होतृत्वमिपि यत्तस्य देवताह्वानहेतुकम्। रत्नधायितमत्वं च तन्नरैर्ज्ञायते कथम्। अविज्ञातगुणानाञ्च कल्पते स्तवनं न तु। स्वतन्त्रो वेद एवैतत् केवलो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वक्तुमर्हति।" इति। एवञ्च वेदाध्येतारोऽध्यापयितारश्च वैदिकपदवाक्यतदर्थ-रूपाण्यालोचयन्तः स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति। बौद्धागमानां स्वरूपस्यैवमभावादेव तेषां पौरुषेयत्वे निश्चिते बौद्धाद्यध्ययनं सर्वमित्यनुमानं नाटकाध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। नाटकाध्ययनसामान्यादधुनाध्ययनं यथे" ति वदाभाससमानमेवेति युक्तम्। यच्च बौद्धागमानामपि अपौरुषेयत्वेन प्रामाण्ये लाघवं प्रमाणत्वेनोपन्यस्तम्, तत्रोच्यते-लाघवतर्कः प्रमाणानामनुग्राहकः न तु स्वतः प्रमाणभूतः, प्रमाणेन सिद्धेऽर्थे तदनुग्राहकत्वेन तर्क उपयुज्यते,यथा न्यायनये क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वादित्यनुमानेन सिद्ध ईश्वरे लाघवतर्केण तस्यैकत्वं सिद्ध्यति। एवञ्च लाघवं प्रमाणोपष्टम्भकमेव, न तु प्रमाणान्त-रोपमर्दने स्वतः प्रमाणम्। स्मर्तव्यास्मरणमेव दृश्यादर्शनवत् कर्तुरभावस्य साधकम् बौद्धागमानान्तु कर्तृस्मरणमेवापौरुषेयत्वस्य बाधकम्। वेदे तु पुनः स्मर्तव्यकर्तुरस्मरणमेवापौरुषेयत्वस्य साधकम्। अतः बौद्धागमानामपौरुषे-यत्वासम्भवात् वेदमूलत्वस्य तैरेवानङ्गीकृतत्वात् चोदनाधिकरणन्यायेन धर्मेऽप्रामाण्यं सिद्ध्यति। एवमेव कल्पानां षडङ्गानां वेदेतरसकलविद्यास्थानानां च दृढकर्तृस्मृतेः पौरुषेयत्वमेव न त्वपौरुषेयत्वम्, तथापि स्मृत्यधिकरण-न्यायेन वेदमूलतया धर्मे प्रामाण्यं युज्यते। यदुक्तं कल्पानां पौरुषेयत्वे नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तिरिति तत्रोच्यते दृढकर्तुः स्मरणेन कल्पानां पौरुषेयत्वे निश्चिते प्रवाहनित्यत्वकल्पनया तदुपपत्तेर्न दोषः। वेदानामङ्गिनां नित्यत्वादेव तदर्थाध्यवसायाय प्रवृत्तानां तत्तन्महर्षिप्रणीतानां कल्पसूत्राणामङ्गा-न्तराणाञ्च प्रवाहनित्यत्वमिति नित्यब्रह्मयज्ञाङ्गत्वेन तेषां विधानमुपपद्यते। "मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमेके" इति गौतमस्मृतिस्तु एकग्रहणात्पूर्व-पक्षरूपेण तन्मतमुपस्थापयति, सिद्धान्तरूपेण तु मन्त्रब्राह्मणयोरेव वेदत्वं बोधयतीत्यस्माकं मतमेवोपोद्बलयति इति न दोषः। यच्चोक्तं कल्पानां तदितरवेदाङ्गापेक्षया वैशिष्ट्यं प्रत्यक्षपठितवेदवाक्यघटितत्वेन शाखान्तर-वदेवापौरुषेयवेदत्वमिति तत्समाधीयते-क्वचित्कल्पेषु साक्षादेव वेदवाक्यानि प्रत्यक्षश्रुतानि दृश्यन्ते, क्वचिच्च प्रकारान्तरेणेति, न चैतावता क्वचिद्वेदमुद्रा-दर्शनमात्रेण वेदत्वं न युक्तम्, वेदत्वावेदत्वे अपौरुषेयवाक्यत्व-पौरुषेयवाक्यत्वप्रयुक्ते। ते च कर्तुरस्मरणस्मरणप्रयुक्ते इत्युक्तत्वात् कल्पानामपि पौरुषेयत्वेन वेदमूलतया प्रामाण्यं युक्तम्। कल्पानां नाना-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शाखागतविनियोजकब्राह्मणवाक्यसङ्ग्रहात्मकत्वात् श्रुतिलिङ्ग्रादिप्रमाणदुर्बोध-नानाशाखागतवाक्यानामल्पज्ञैरुपसंहारस्याशक्यत्वात् सार्थक्यमपि सम्यगुपपद्यते। किञ्च वेदेषु प्रायः सर्वाणि वाक्यान्यर्थवादबहुलान्येव दृश्यन्ते, कल्पसूत्रेषु तु प्रायेणार्थवादरहितान्येवेति वेदमुद्राराहित्यादपि कल्पानामवेदत्वमेव युक्तम्। तदेवं वेदमूलकतया कल्पानां प्रामण्ये स्मृत्यधिकरणन्यायेन सिद्धे यत्र विषये वेदकल्पयोर्विरोधस्तत्र विरोधाधिकरणनयेन वेदोक्तार्थस्यैव प्रामाण्यम् यावत्कल्पोक्तार्थबोधकप्रत्यक्षवेदवाक्यादर्शनं तावत्तस्यानुष्ठानलक्षणमप्रामाण्यं वेति निश्चीयते। तद्यथा निदानसूत्रे "सर्वेऽपरपक्षः पूर्णमासस्य कालः सर्वः पूर्वपक्षो दर्शस्येति पूर्वपक्षापरपक्षयोः सर्वासु तिथिषु दर्शपूर्णमासयोरनुष्ठानं विहितम्। "अमावास्यायाममावास्यया यजेत" "पौर्णमास्यां पौर्णमास्यया यजेत" इति प्रत्यक्षश्रुतौ दर्शस्यामावास्यायां पूर्णमासस्य च पौर्णमास्यामनुष्ठानं विहितम्। अतः प्रत्ययक्षश्रुतिकल्पयोर्विरोधे प्रत्यक्षश्रुतेरेव प्राबाल्यमिति निश्चीयते। अत्र" सर्वत्र च प्रयुक्तत्वात् सन्निधानशास्त्राच्चे" ति जैमिनीयं सूत्रम्। इदमुदाहरणं भाष्यकारैर्दर्शितम्–"आचार्यवचनं हि भवति "पूर्वपक्षे सर्वासु तिथिष्वमावास्या" इति, सन्निहितं च शास्त्रं पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत" इति। तेन श्रुतिविरुद्धवचनान्न सत्यवाचः। तस्मदप्रमाणम्" इति च भाष्यम्। श्रीमाधवाचार्यैरपि गुरुमतविवेचनावसरेऽत्राधिकरण इदमेवोदाहरणरूपेण स्वीकृतमिति अनुपदमेव प्रदर्शयिष्यते। वार्त्तिककारास्तु इदमुदाहरणमध्यारोपितमत अन्यदुदाहरणम-पेक्षितमिति मन्यन्ते। तेषामयं भावः एतस्य सर्वतिथिषु दर्शपूर्णमासयोरनुष्ठानस्य बोधकस्य वाक्यस्य गृह्यकारवचनत्वेन तदधिकृतपार्वणस्थालीपाकविषयत्वान्न तदनधिकृतदर्शपूर्णमासविषयत्वम् यथा "आसायमाहुतेः प्रातराहुतिः नात्येति, आप्रातराहुतेः सायमाहुतिः" इति गोतमगृह्यसूत्रस्य स्मार्तहोमविषयत्वं न तु श्रौताग्निहोत्रविषयत्वमिति स्वीक्रियते तथा "आपौर्णमास्यमावास्या नात्येति" इत्यस्यापि श्रौतदर्शपूर्णमासविषयत्वाभावात् प्रत्यक्षश्रुतिविरोधोदाहरणत्वं न घटत इति। अत्र अग्नित्रयसाध्यं कर्म श्रौतकर्म, एकाग्निसाध्यं कर्म स्मार्तमिति श्रौतस्मार्तयोर्विवेकः। औपौर्णमास्या अमावास्या नात्येति, आमावास्यायाः पौर्णमासीति गोतमगृह्यकारोदितवाक्यस्योदाहरणविषये एवमनुदाहरणत्वकथनमिदं सङ्गच्छते। निदानसूत्रे "सर्वोऽपरपक्षः पूर्णमासस्य कालः" सर्वः पूर्वपक्षो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दर्शस्य" इति वाक्यस्य विषये श्रौतदर्शपूर्णमाससम्बन्धस्य स्पष्टं प्रतीते: एवं वक्तुं न शक्यते, परन्तु "स्वकालादुत्तर: कालो गौण: पूर्वस्य कर्मण इति न्यायेन पौर्णमास्यां पौर्णमास्या यजेत' इति वचनानुरोधादुक्त-निदानसूत्रवाक्यस्य गौणकालविधायकत्वावगतेर्न मुख्यकालविधायकश्रुतिविरोध इति वक्तुं शक्यत्वात् प्रत्यक्षश्रुतिकल्पसूत्रयोर्विरोध इदमनुदाहार्यमिति वक्तव्यं भवति। उदाहरणान्तरञ्च आपस्तम्बवचनं "सर्वाणि हर्वीषिं पर्यग्नि करोति इति पठ्यते, शतपथब्राह्मणे तु "पुरोडाशं पर्यग्नि करोति' इति श्रूयते। अत: श्रुति: प्रत्यक्षपठिता पुरोडाशस्यैव पर्यग्निकरणं बोधयति, कल्पसूत्रन्तु सर्वशब्देन प्रकृतयागीयहविर्मात्रस्य पर्यग्किरणं बोधयतीति प्रत्यक्षश्रुति-कल्पसूत्रयोर्विरोधाद्विरोधाधिकरणनयेन कल्पसूत्रस्यैवात्र विषयेऽप्रामाण्यम्, यावत्कल्पसूत्रस्य मूलभूता श्रुतिर्न दृश्यते तावत् कल्पसूत्रोक्तस्याननुष्ठान-लक्षणमप्रामाण्यमवसीयते इति। इत्थं भाट्टमतेन कल्पसूत्राधिकरणं निरूपितम्।

सम्प्रति गुरुमतेनेदमधिकरणं निरूप्यते-

## जैमिनीयन्यायमाला

**कल्पे सर्वतिथौ दर्शकार्यतोक्ते: श्रुतिर्न मा।**
**न कल्पे साध्यवेदत्वप्रहाणाद्दुर्बलत्वत:।।25।।**

## प्रकाशिका

सर्वतिथौ दर्शकार्यता = अमावास्यायागस्यकर्तव्यताया: उक्ते: श्रुति: अमावास्यायाममावास्यया यजेत" इति श्रुति: न मा = न प्रमाणम् इति पूर्वपक्षे प्राप्ते न ="अमावास्यायाममावास्यया यजेत" इति प्रत्यक्षश्रुति: प्रमाणमेव, कल्पे साध्यवेदत्वप्रहाणाद् कल्पे वेदत्वमद्यावधि न सिद्धम् किन्तु साध्यम् तच्च दुर्बलत्वत: प्रत्यक्षश्रुतिविरोधेन बाधितं भवतीति प्रत्यक्षश्रुते: श्रुत्यन्तरविरोधाभावत् श्रुति: प्रमाणमेवेति निश्चितमिति सिद्धान्त:।

अयमाशय:-अस्मिन् तृतीयपादे आदौ स्मृत्यधिकरणं तदनु अपवादसङ्गत्या विरोधाधिकरणम्, तदनु क्रमश: अधिकरणयो: विषयव्याप्तिरुच्यते, पूर्वभावित्वादादौ स्मृत्यधिकरणस्य विषयव्याप्तिरूपेण विरोधनयापवादरूपेण च शिष्टाकोपाधिकरणं प्रवृत्तम्, तदनन्तरं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विरोधप्रकारविशेषनिरूपणार्थं यववराहाधिकरणपिकाधिकरणयोर्निरूपणं कृतमिति पिकाधिकरणं यावद्विरोधाधिकरणस्थितिः तदनु तद्विषयव्याप्तिः कल्पसूत्राधिकरणे प्रदर्श्यत इति कल्पसूत्राधिकरणसङ्गतिः। कल्पसूत्रकारैः वेदवाक्यान्येव नानाशाखाप्रकरणानि अनारभ्यवादविप्रकीर्णानि अनुक्रमेण संहत्य पठितानि, वेदत्वादेव तेषामनपेक्षितत्वम् पुरुषाधीनरचनतया पौरुषेयत्वञ्च। अत एव कल्पसूत्राणां स्मृत्यादिविद्यास्थानेभ्यो वैशिष्ट्यम्। शाखान्तरपाठे शाखान्तरीयाणां वर्णादिविकारेऽपि यथा स एवायं वेद इति प्रत्यभिज्ञा यथा वा महावाक्यस्यैकदेशमात्रस्येवोपन्यस्तेऽपि वेदः प्रमाणत्वेनोपन्यस्त इति यथा वा "नमो देवेभ्य" इत्यस्य स्थाने नमो गुरुभ्य इति पदान्तरोहे सत्यपि स एवायं मन्त्र इति प्रत्यभिज्ञा तथैव स्वरहीनेऽर्थवादहीनेऽपि कल्पसूत्रपठिते वाक्ये वेदवाक्यमेवेति प्रत्यभिज्ञोति कल्पसूत्राणां वेदत्वमेव। एवं कल्पसूत्राणां प्रत्यभिज्ञया वेदत्वं साध्यमिति साध्यवेदत्वम्, कल्पसूत्रे च "सर्वासु तिथिष्वमावास्या कार्ये" ति तिथ्यनियमो दर्शयागस्य दृश्यते। "अमावास्याम-मावास्यया यजेत" इति च सिद्धवेदे प्रत्यक्षपठिते दर्शयागस्यामावास्या-तिथिनियमो दृश्यते, अतः सिद्धसाध्यवेदोक्तयोः तिथिनियमानियमयोरतुल्य-प्राप्तयोरुभयोरपि अन्योन्यव्याघात एव परस्पर व्याघाताच्चाप्रामाण्यं चोदनाया इति पूर्वपक्षः।

सिद्धान्तस्तु कल्पसूत्राणां वेदत्वं न युक्तम्, यद्यपि वेदैकदेशप्रत्यभिज्ञा तथापि पुरुषैर्वेदादवगतोऽर्थः स्ववचनेनोक्तः। तत्तत्कल्पसूत्रकारैः मेधाभ्या-सशालिभिः नानाशाखानानाप्रकरणानारम्भाधीतात् सार्थवादकाद्वेदवाक्यार्थं ज्ञात्वा अनधिगतन्यायतत्त्वानां स्वत एव यथाविहितानुष्ठेयज्ञानाशक्तानामनुष्ठातॄणां सौलभ्याय निरन्तरं शीघ्रञ्चानुष्ठेयस्मृतिकरणानि प्रयोगकथनमात्रपराणि स्वेच्छया स्वेप्सितक्रमेण स्वेप्सितपदप्रयोगैः कल्पसूत्राणि प्रणीतानि। अतः प्रमितिपरेभ्यो वेदवाक्येभ्योऽन्यानि पुंवाक्यतया मूलप्रमाणापेक्षाणीति प्रयोगसौकर्यमात्रप्रयोजनानि स्मर्तृभिः कृतानीति स्मृतित्वमेव कल्पसूत्राणां न वेदत्वम्। लाघवार्थं स्ववचनेष्वादरार्थं वेदवर्तिपदैरेव तेषां वाक्यविन्यासः। "सेऽयं दीपज्वाला इति वत् तत्र प्रत्यभिज्ञाप्यत एव बाधिता। वेदैकदेशपाठे तु अभ्यासार्थं वेदस्यैवापेक्षितोभागः उच्चार्यते इति पुरुषेच्छाधीनप्रयोगाभावात् तद्वेदैकदेशस्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रत्यभिज्ञया वेदत्वं युक्तम्। आर्षपदबाधात् पदान्तरोहे च पदान्तरसमभिव्याहारात्स एवायं मन्त्र इति प्रत्यभिज्ञा न पुरुषेच्छाधीनो वेदस्यान्यथाप्रयोग इति न तत्कृतिरिति युज्यते। "आचार्यवचः प्रमाणम् इति वेदोऽपि कल्पसूत्राणां वेदत्वे न प्रमाणत्वेन कल्पते; वेदस्य निखिलस्यापि कार्ये प्रामाण्यस्य चोदनासूत्र उक्तत्वात् सिद्धरूपवेदत्वाभिधानेऽयोग्यत्वात्। तद्वाक्यञ्चाग्नेयस्तुतिपरत्वान् यथा कार्यानगुणं भवति तथा व्याख्येयम्-"आचिनोत्यस्य बुद्धिमिति व्युत्पत्या आचार्यपदेन वेद एवोच्यते वेदवचः प्रमाणमिति सिद्धार्थवादः। कल्पना हि रचना ज्ञात्वा हि क्लृपिः रचनेति कल्पसमाख्ययापि कल्पसूत्राणामवेदत्वं निश्चीयते। अनेनेदमपास्तम् संहिताभागस्यैव वेदत्वं ब्राह्मणभागस्य तद्व्याख्यापरत्वमवेदत्वमिति मतम् "संहितेति" समाख्ययैव वेदैकदेशत्वे संहिताभागे ज्ञाते ब्राह्मणभागानामपि आरण्यकादीनामपि तथैव वेदैकदेशत्वमिति 'मन्त्रब्राह्मणयोर्वेदनामधेयमि-" ति सूत्रप्रामाण्यादपि निश्चीयते, अन्यथा कल्पसूत्राणां यथावेदत्वमत्र भाष्ये सूत्रे च साध्यते तथा ब्राह्मणादिभागानामप्यवेदत्वं साधितं भवेत्। सूत्रकारैः प्रायः सर्वत्र ब्राह्मवाक्यानामेव उदाहरणं प्रदर्शितमिति भाष्यमुखेन स्पष्टं विज्ञायते इत्यपि हेतुना ब्राह्मणादिभागस्यापि वेदत्वमेव युक्तमिति पूर्वोत्तरमीमांसयोर्विवेचने साक्षाद् भवतीति अन्यत्र विवेचयिष्यते। एवं च प्रकृते कल्पसूत्राणामवेदत्वेन निश्चिते वेदमिश्रिततया सनियमाध्ययनं तेषामिति तेन वेदत्वं साधयितुं न शक्यत इति स्मृतिसमानयोगक्षेमत्वे निश्चिते "सर्वासु तिथिषु अमावास्या कर्तव्येत्यादिविषये वेदविरोधे कल्पसूत्राणां बाध्यत्वाद् व्याघाताभावान्निष्प्रत्यूहं चोदनानां प्रामाण्यं पूर्वपादे साधितम्। एवं कल्पसूत्राधिकरणं भाट्टप्राभाकरप्रस्थानयोर्निरूपितम्। इदमत्रावश्यं वक्तव्यम् यद्यपि कल्पसूत्राणां स्मृतिसमानयोगक्षेमत्वमेव तथापि पृथगस्याधिकरणस्यारम्भसामर्थ्यादेव कल्पसूत्राणां वैशिष्ट्यं सिद्धं भवति। कल्पेषु प्रत्यक्षपठितवेदवाक्यानि बहुषु स्थलेषु तथैव पठितानि क्वचिच्च न्यायोपन्यासपूर्वकं वेदवाक्यसदृशानि वाक्यानि पठितानि। अतः प्रत्यक्षपठितश्रुतिविरोधेऽपि किमिदं कल्पवाक्यं शाखान्तरीयमुत कल्पकारैरेव प्रणीतमिति सन्देहः स्वभावत उपजायते, तत्र कथं व्यवस्थेति विचारे शास्त्रदीपिका प्रत्यक्षश्रुतिविरोधे मीमांसान्याविरोधे च न्यायोपन्यासरहितं न्यायोपन्याससहितञ्चद्वयमपि सर्वथाप्रामाण्ययुक्तमेवेति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतिपादयति, उदाहरणरूपेण "जाघनीभि: पत्नी संयाजयन्ति वाक्यमिह कल्पोक्तमुपन्यस्यति। भाट्टदीपिका च न्यायोपन्यासरहितं मीमांसान्यायविरुद्धञ्च कल्पसूत्रवाक्यं प्रत्यक्षश्रुतिविरोधेऽपि शाखान्तरमूलसम्भवेन वचनविरोधे न्यायस्यैवाभासत्वात् मीमांसान्यायविरोधस्याकिञ्चित्करत्वात् कल्पोक्तं वाक्यं युक्तमेविति प्रतिपादयति, अत्र वैदिकैराश्वलायनकात्यायनसूत्रादीनि तानि तत्तच्चरणैरेव पठनीयानीत्येवं परिग्रहव्यवस्था स्वीकृता, तद्दृष्ट्या विचारे भाट्टदीपिका मतमेव युक्तमित्यस्माभिर्वक्तुं शक्यते। अत एव नवमे अग्निष्टुति सुब्रह्मण्यानिगदगतानां हरिवदादिशब्दनामपि उहोऽपेक्षित उत न कर्तव्य इति विशये "असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत" देवतानां विग्रहादिपञ्चकाभावेन हरिवत्वादिगुणारोपेण केवलमिन्द्रस्तुतिमात्रार्थतया हरिवदादिशब्दानां स्वार्थे तात्पर्याभावाद्विकृतावनूहः इति साधिते छान्दोगसूत्रे "ऊहितपाठदर्शनात् तथैव मूलभूतश्रुतिपाठस्याप्यनुमानान्न्यायस्यैव मीमांसान्यायस्यैवाभासत्वं तदेतन्न रोचयन्तो याज्ञिका इत्यादिभाष्यवार्तिकयोः स्पष्टीकृतम्, यद्यप्यत्र मीमांसान्यायविरोधेऽपि कल्पसूत्रपठितवेदस्य प्रामाण्यमिति स्पष्टं भवति न तु प्रत्यक्षश्रुतिविरोधेऽपीति तथापि मीमांसाधिकरणे उक्ते प्रत्यक्षश्रुतेरेव एवमर्थस्य निर्णीतत्वात् प्रत्यक्षश्रुतिविरोधेऽपि न्यायोपन्यासरहितकल्पसूत्रपाठस्य वेदमूलत्वेन प्रामाण्यमप्यनेनोक्तमर्थाज्ज्ञायते। अत एव "औडुम्बरी सर्वा वेष्टयितव्या "इत्यस्य यावत्प्रत्यक्षश्रुति-दर्शनाभावस्तावदननुष्ठानलक्षणमप्रामाण्यमितिं न युक्तमित्यस्मद्गुरुचरणा इत्यस्मद्गुरुचरणाः। एवं सप्रयोजनं कल्पसूत्राणां प्रामाण्यप्रकारविवेचन-परमधिकरणं निरूपितम्।

सम्प्रति अष्टमाधिकरणं होलाकाधिकरणं निरूप्यते—

**जैमिनीयन्यायमाला**

**होलाकादेर्व्यवस्था स्यात् साधारण्यमुताग्रिमः।**
**देशभेदेन दृष्टत्वात् साम्यं मूलसमत्वतः॥26॥**

**प्रकाशिका**

होलाकादेः—वसन्तोत्सवादिशिष्टाचाराणां व्यवस्था = देशादिभेदेन

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रामाण्यं न तु सर्वेषामिति स्वीकार्यमुत साधारण्यम् =सर्वेषामेव धर्मत्वेनानुष्ठेयत्वमिति सन्देहेऽग्रिमः = प्रथमपक्षः समीचीनः देशभेदेन दृष्टत्वात्= तत्तद्देशीयैरेवानुष्ठीयते इति प्रत्यक्षात् इति पूर्वपक्षे प्राप्ते साम्यम् = सर्वेषामेव तेषां धर्मत्वेनानुष्ठेय त्वं युक्तम्, मूलसमत्वतः= आचारानुमितश्रुतेरेकरूपत्वादिति सिद्धान्तः।

अयमाशयः-पूर्वाधिकरणे स्मृतिपादे यद्वेदेतरवैदिकविद्यास्थानानां प्रामाण्यं साधितन्तद्वेदमूलतयेति न स्वतन्त्रतयेति स्वतन्त्रतया प्रमाणीबुबूषतां बौद्धादीनाञ्च मतानां निरासपूर्वकं स्मारितम्। इदानीमवसरप्राप्तत्वात् केषुचित्स्मृत्याचारेषु मूलभूतवेदगतो विशेषो विचार्यते। अतः प्रमाणगतविशेष-विचारपरत्वात्प्रमाणाध्यायेन सङ्गतम्। फलतश्च तत्तत्स्मृत्यध्येत्राचरित्रधि-कारानधिकारविचारः पर्यवस्यति। अन्यथा होलाकाद्यनुष्ठाने प्राच्या एवाधिकारिण उत सर्वेऽपि इति विचारेऽधिकाराध्यायेन सङ्गतं भवेत्।

अत्रैवं पूर्वपक्षः-होलाकाचारः वसन्तोत्सवः प्राच्यैरेवानुष्ठीयते, अर्कवृक्षादिरूपकुलक्रमागतस्थावरदेवताभ्यर्चनात्मका आह्निनैबुकादयो दाक्षिणात्यैरेवानुष्ठीयन्ते, मातृगणपूजालक्षणयागादयः, प्रतीच्यैरेव ज्येष्ठपौर्णमास्यामर्चनापूर्वकक्रियमाणवृषभधावनरूपा वृषभयज्ञादयश्चो-दीच्यैरेवानुष्ठीयन्ते। गोमयमयीं देवतां दूर्वादिभिरभ्यर्च्यज्ञातित्वकल्प-नामाह्नीनैबुकमित्येके, मङ्गलवारे दधिमन्थनमित्यन्ये, प्रतिदिनं तण्डुलमुष्टिं मासमेकं भाण्डे निक्षिप्य घृतेन तेनापूपकं देवतापूजनामित्यपर इति तात्पर्यपरिशुद्धौ श्रीमन्त उदयनाचार्याः। एवं देशभेदेनानुष्ठीयमानानामाचाराणां प्रामाण्यं श्रुतिस्मृति मूलतया सिद्ध्यतीति पूर्वमेवोपपादितम्। तत्राचारान्मूलभूता स्मृतिः स्मृतेश्च मूलभूताश्रुतिरनुमीयते। अनुमानञ्च पर्वते धूमदर्शनात्पर्वते वह्निरनुमीयते इति दर्शनाद् यत्र लिङ्गन्दृश्यते तत्रैव पक्षे लिङ्ग्यनुमीयते यथा तथा यत्र प्राच्यादिदेशविशेषे धर्मत्वेनानुष्ठीयमानाचारदर्शनात्रैव अर्थात् तेषामेव तदाचारस्य धर्मत्वमिति आचाराणां मूलभूतं श्रुतिवाक्यं तथाभूतमेवानुमीयते। तदुक्तम् लिङ्गव्यवस्थाया लिङ्गी व्यवस्थां प्रतिपद्यते। धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते।। इति। अतः होलाकाद्याचाराणां देशभेदेनैव धर्मत्वव्यवस्था युज्यते। एवं पुराणमानवेतिहासव्यतिरिक्त-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गौतमवसिष्ठशङ्खलिखितहारीतापस्तम्बबौधायनादिप्रणीतधर्मशास्त्राणाम्, गृह्यग्रन्थानाञ्च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते। तद्यथा वासिष्ठं बह्वृचैरेव शङ्खलिखितस्मृतिश्च वाजसनेयिभिः शुक्लयजुर्वेदिभिः, आपस्तम्बीयबोधायनीये च तैत्तिरीयैरेव कृष्णयजुर्वेदिभिः, गौतमीयगोभलीये च छान्दोगैरेव सामवेदिभिरेवेति धर्मे प्रमाणत्वेन परिग्रहस्य व्यवस्था दृश्यते। एवं वैदिकानां प्रसिद्धिश्च वयमाश्वलायनीयाः वयं बौधायनीया इति, गोत्रचरणैः सहाश्वलायशाखाध्यायी बौधायनशाखाध्यायी इति प्रयोगोऽपि दृश्यते। अतः तत्रापि व्यवस्थाभेदमभ्युपगम्य किं तत्तद्गृह्यसूत्रं तथाभूतवेदमूलकतया तेषामेव प्रमाणानि समानन्यायात् स्वीकार्यमिति पूर्वपक्षः।

सिद्धान्तस्तु–होलाकाद्याचाराः धर्मत्वेन सर्वैरङ्गीकार्याः शिष्टाचारत्वान् न तु तत्तद्देशीयानामेव धर्मत्वमिति व्यवस्था युक्तमिनेति। प्रथमं सर्वत्र विधिवाक्येषु कर्तृविशेषज्ञानं कथं भवतीति विवेचनीयम्। स्वर्गकामो यजेत इदं प्रसिद्धं यागविधायकं वाक्यम् अनेन सर्वेषां कृते यागेन स्वर्गं भावयेदिति प्रतिपाद्यते। तथाहि यजेत इत्यत्र लिङ्प्रत्ययस्य प्रवर्तना वाच्या, तदेकरसत्वाद्विधेः। सा च प्रवृत्यनुकूलव्यापारात्मिका प्रवर्तयितृनिष्ठव्यापारविशेषो विधिः। प्रवृत्तिस्त्वर्थभावना। सा च भाव्यादिभिस्त्रिभिरंशैरविनाभूता सती प्रथमं समानप्रत्ययोपात्तविधावन्वेति, न तु समानपदोपात्ते धात्वर्थे; एकपदश्रुत्यपेक्षया एकपदश्रुतेरन्तरङ्गत्वेन बलवत्वात्। सा च पुरुषप्रवृत्ति-रूपार्थभावना पुरुषाभिलषितमेव भाव्यं सामान्यतो लब्ध्वा प्रथमं विधावन्वेति, अपुरुषार्थे पुरुषं प्रवर्तयितुमशक्यत्वात्। ततश्च विधिबलात् सामान्यतो लब्धफला भावना किं तत्पुरुषाभिलषितमिति तद्विशेषमपेक्षमाणा एकपदोपात्तमपि धात्वर्थमपुरुषार्थत्वादुल्लङ्घ्य कामपदोपात्तेन स्वर्गेणान्वेति स्वर्गं पुरुषाभिलषितं भावयेदिति। अतः भाव्यांशस्य स्वर्गकामपदेन लाभात् यजेत इत्यत्र धात्वर्थस्य यागस्य साधनत्वेन विधानं भवति इति षष्ठप्रथमे प्रत्यर्थञ्चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धस्तस्मात् कर्मोपदेशः स्याद् इत्यत्रोक्तम्। तथा च अत्र स्वर्गकामो यजेत इत्यत्र काम्यते इति कामः फलम्, स्वर्गश्चासौ कामश्चेति स्वर्गकामः स्वर्गफलमित्यर्थः तच्च यागेन भावयेदिति उपदिश्यते, अधिकारिविशेषस्तु न प्रतिपाद्यते। एवञ्च स्वर्गकामो यजेत इत्यत्राविशेषाद्यागस्य

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वधर्मत्वेन विहितत्वेऽपि अग्निविद्यादिराहित्येनासमर्थस्य शूद्रादेः कर्तृत्वासम्भवात् समर्थःसामर्थ्यात् कर्ता इति निश्चीयते। एवं पतितषण्डादीनां निषेधवशात्तद्भिन्नानामेव कर्तृत्वं निश्चीयते इति षष्ठे अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तः इति अधिकारिलक्षणमुखेन निर्णीतम्। एवं क्वचित् ब्राह्मणो बृहस्पतिसवेन यजेत राजा राजसूयेन यजेत इत्यादौ ब्राह्मणाद्युपपदैः कर्तृविशेषज्ञानं भवति। तदेवं सर्वत्र विधिवाक्येषु कर्तृविशेषलाभः सामर्थ्यान्निषेधवशादुपपदाद्वा भवति अर्थित्वञ्च सर्वसाधारणमिति सिद्ध्यति। प्रकृते च होलाकाद्याचाराणां शिष्टैरनुष्ठीयमानत्वात् श्रुतिस्मृतिमूलकतया प्रामाण्यमिति पूर्वमेव निर्णीतम्, तत्र तेषां प्राच्यानामेव धर्मत्वं न तु दाक्षिणात्यादीनामिति दाक्षिणात्यादिव्यावृत्तकर्तृविशेषलाभः सामर्थ्यान्निषेधानुरोधेन वा भवति तयोः अशक्तपतितादिव्यावर्तकत्वेऽपि तद्भिन्नदाक्षिणात्यादिव्यावर्तकत्वासम्भवात्। अतः उपपदवशेनार्थात् दाक्षिणात्यैर्होलाकादि न कर्तव्यमित्येवं विधनिषेधकल्पनया प्राच्यानामेवेति कर्तृविशेषो वक्तव्यः। तच्चोपपदार्थस्य निर्वक्तुमशक्यत्वादेव न युक्तम्। तथाहि न तावत्प्राच्यत्वादिकं जातिः, प्राच्यादिशब्दानां व्याकरणे माथुरादिशब्दवदेव तत्र भवः, तत्र जातः, सोऽस्य जातः, तत्र गतः, तत्र प्रस्थित इत्यादिष्वर्थेष्वनुशासनात्पाचकादिशब्दवदेव यौगिकत्वावगतेः क्लृप्तावयवार्थपरित्यागेन रूढिकल्पने जात्यन्तराङ्गीकारे च प्रमाणाभावात्। नापि प्राच्यत्वादिकं व्यक्तिविशेषबोधकम् व्यक्तीनामानन्त्यात् न ह्यनन्तानां व्यक्तीनामेकं किञ्चिदभिधानोपलक्षणं विना उपपदमेकं सम्भवति, यदि च किञ्चिज्जातिगुणाद्यात्मकमुपलक्षणं कल्प्यते चेत् सर्वस्य व्यभिचारित्वेनाननुगतत्वात्तन्न युक्तम्। स्मृतिमूलश्रुतिषु तु यद्यपि चरणविशेषवाच्याश्वलायनाद्युपपदं भवति इति वक्तुं शक्यते तथापि तत्र प्रमाणं किमिति विचारे श्रुतिकल्पकं स्मृतिवाक्यमिति वक्तुं न शक्यते स्मृतिवाक्ये आश्वलायनादीनामयं धर्म इत्येवमाद्युपपदस्याश्रवणात्। यस्तु पाठ आश्वलायनादिव्यवस्थितो दृश्यते इति लिङ्गविधया सामर्थ्यात् श्रुतिकल्पनं सम्भवतीति तेन्न पाठव्यवस्थाया अन्यथाप्युपपत्तेः तादृशोपपदघटितश्रुतिकल्पने सामर्थ्याभावात्। कर्ता ह्याचार्याश्वलायनः स्वशिष्यान् स्वग्रन्थमध्यापयामास तेऽप्यन्यानित्येवं पाठस्तन्मात्रे व्यवस्थित इति आचार्याश्वलायनादिसूत्रपठितानां सर्वविषयकत्वेऽपि व्यवस्थाया उपपत्तेः। यथा एते पौराणिका एते वैदिका

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एते दार्शनिका इत्येवं व्यवस्थावत्प्रसिद्धिभेदे सत्यपि पुराणप्रतिपन्नानां वेदादिप्रतिपन्नानां सिद्धान्तानां सर्वविषयकत्वमेव सर्वैः स्वीक्रियते। एवञ्च होलाकाद्याचाराणां स्मार्तधर्माणामाश्वलायनादिमहर्षिप्रणीतानां सर्वधर्मत्वमेव युक्तमिति सङ्गच्छते। यत्र च ब्राह्मणो यजेत" राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाज इति श्रुतावेवोपपदं दृश्यते तत्र च श्रुत्यैव प्रतिपादितत्वाद्व्यवस्थानिवार्या। यत्रापि शिखाकल्पे स्मृत्या श्रुत्यनुमानं तत्रापि मुण्डा भृगवः" इति स्मृतौ स्पष्टं गोत्रोपपदश्रवणात्तद्बलेन तथा भूतश्रुतिकल्पनासम्भवाद् गोत्रभेदेन व्यवस्था युक्ता। एवं ये च कुलाचारा अष्टमीतुर्दश्योरिष्टदेवतारार्तिकाद्याचाराः तेऽपि मूलभूतश्रुतिकल्पने कुलरूपोपपदसम्भवाद्व्यवस्थिताः कुलभेदेनेति युक्तम्, यद्यपि तत्तत्कुलधर्मत्वेन स्थितानामाचाराणां प्रत्येकं श्रुतिकल्पने तत्तकुलविशेषवाच्युपपदासम्भावस्तुल्य एव तथापि कुलधर्मः कार्यः इति आचार्यवचः प्रमाणम्, शिष्टाचारः प्रमाणम् इति वत् सामान्यतः सर्वकुलधर्ममूलभूतत्वेन कल्पितस्यैव विधेः कुलशब्दस्य ससम्बन्धिकत्वाद्यस्य यत् कुलं तेन स कुलधर्मः कर्तव्य इत्यर्थपर्यवसानात् विधिविषयविशेषणभूतकुलपदोपादानमहिम्नैवार्थात् कर्तृविशेषावधारणसिद्धेः कुलभेदेन व्यवस्था युक्ता। "येनास्य पितरो याताः येन याताः पितामहाः। इति स्मृत्यापि तत्तत् कुलाचाराणां तत्तत् कुलभेदेन व्यवस्था सिद्ध्यति। न चैवं होलाकाद्याचारकल्प्यश्रुतेरपि सर्वसाधारण्येनेकस्या एव कल्पनायां कुलशब्दोपेताया एव कल्पनीयत्वोपपत्तौ होलाकाद्याचारितृकुलमात्रविषयत्वोपत्तेर्व्यवस्था युज्यत इति वाच्यम् तथासति कुलधर्मः कर्तव्य इत्येवंविधश्रुतिमूलकत्वेनैव तेषामपि कुलधर्मत्वेन प्रामाण्यं स्यात् तच्चायुक्तम् तेषां कुलधर्मत्वाभावात्। कुलधर्मत्वं मास्तु देशधर्मत्वेन व्यवस्था भवत्विति चेत्तदपि न युज्यते। यतः प्राग्देशसम्बन्धनिमित्तोऽयं प्राच्यशब्द इति योगेन निर्वचनमत्र न सङ्गच्छते; प्राग्देशाद्दक्षिणदेशे समागतानां पुत्रादिसन्त तावपि प्राच्यपदप्रयोगात् दक्षिणदेशात् प्राग्देशे समागतेष्वप्यप्रयोगाच्च, सर्वस्यापि किञ्चिदपेक्षया प्राग्देशत्वात् सर्वेषां प्राच्यत्वापत्तिश्च। प्राच्यशब्दस्य जात्यादिनिमितत्त्वस्य पूर्वमेव निराकृतत्वात् अवश्यं देशसम्बन्धनिमित्तत्वस्यैव स्वीकर्तव्यत्वात् होलाकाद्याचरितृमात्रानुवृत्तोपपदत्वं न सम्भवति। तदेवं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

होलाकाद्याचारानुमितमूलभूते श्रुतिवाक्ये सामर्थ्यान्निषेधवशादुपपदवशाद्वा कर्तृविशेषज्ञानस्य प्राच्यभिन्नोदीच्यादिव्यावृत्तस्यासम्भवात् सर्वधर्मत्वमेव होलाकाद्याचाराणां युक्तमिति सिद्ध्यति।

प्राभाकरमतेनेदमधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ पदे।**
**अर्थाबोधादमात्वं चेन्न सामान्यानुमानतः॥27॥**

**प्रकाशिका**

शिष्टाचारैरनुमितायाः प्राच्यादिपदयुक्तायाः श्रुतेः होलाकाचाराः प्राच्यैः कार्याः इत्येवं रूपायाः श्रुतेः अनुमितौ पदे अनुमितश्रुतौ प्राच्यपदस्य अर्थाबोधाद् = निश्चितार्थज्ञानासम्भवाद् अमात्वं =अप्रमाणत्वं चेदिति पूर्वपक्षे न = अप्रमाणत्वम् सामान्यानुमानतः= प्राच्यादिपदरहितायाः होलाकाः कार्या इत्येवंरूपाया एव श्रुतेरनुमानसम्भवात् तस्याः श्रुतेश्चार्थनिश्चयसम्भवादिति।

**अयमाशयः**–पूर्वाधिकरणे कल्पसूत्राणामपि स्मृतितुल्यता-स्थापनानन्तरमेतत्सर्वगतचिन्तेयं प्रवर्तत इहेत्यधिकरणसङ्गतिः। होलाकाद्याचाराः केचन अभिमानमात्रात् केषाञ्चिदित्येव कैचिदनुष्ठीयते, ते किं तेषामेव कर्तव्या उतान्येषामपीति विषयशुद्ध्यर्थं चिन्त्यते फलतः होलाकादि-मूलवेदत्वेनानुमिता चोदना किमप्रमाणमुत प्रमाणमितिचिन्ता सिद्ध्यति, अतः, प्रमाणाध्यायेन सङ्गतं भवति। अत्रायं पूर्वपक्षः–स्मृत्यधिकरणनयादेव शिष्टाचाराणां महाजनादृतत्वात् नित्यानुमेयवेदमूलतया प्रामाण्यम् प्रतिपादितं भवति। यथाकार्यं हि कारणमनुमेयम्, कार्यञ्चात्र शिष्टाचारः प्राच्याद्यालिङ्गित एव, अतः प्राच्याद्यालिङ्गितमेव मूलवेदवाक्यमनुमीयते, तेन यत्प्राच्यैः क्रियते तत्तेषामेव नान्येषामिति निश्चीयते। राद्धान्तस्तु यद्यैः क्रियते तत्तेषामेवेति कर्तृनियमः श्रुतिगम्यो न भवति प्राच्यादिपदवद्वेदानुमानस्यासम्भवात्, यतः प्राचीदेशे भवः, प्राग्देशोऽस्य निवास प्राचीदेशादागतो वैतत्त्रयान्यतमे हि प्राच्याख्या भवति, तथाविधवेदवाक्यानुमानेन प्राच्यादीनामेव तेषामाचाराणां धर्मत्वं निश्चीयते चेत् प्राच्यसुतः यः स्वयं तत्र न जातः न वा तत्र वसति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न वा तद्देशादागतः सोऽपि तदाचारमनुवर्तत इति यत्प्रत्यक्षं तद्विरुद्धं स्यात् अतो न देशनिबन्धनाख्यानुवर्त्यनुष्ठानम्। अत एव न लोहिताक्षत्वादिपुं-संस्थानादिनाप्याचारनियमः प्राच्यपदवत्त्या श्रुत्वा बोधयितुं शक्यते। एवञ्च सर्वानुष्ठात्रनुगताननुष्ठातृव्यावृत्तविशेषरूपासिद्धेः न कर्तृनियममूलश्रुत्यनुमेति सर्वैरेव होलाकाद्यनुष्ठानं कार्यमिति युक्तम्। इयं च विषयशुद्धिचिन्ता भाट्टैर्यथा प्रतिपादिता तथैव गुरुमतेऽपि स्वीक्रियते। मूलचिन्ता तु आचारानुमितिहोलाकादिचोदना अप्रमाणं प्रमाणं वेति विशये पूर्वपक्षः प्राच्योऽहं तस्मान्ममेदं कर्तव्यमित्येवमाभिमानिकप्राच्याद्यालिङ्गितोऽयमाचारः तथा च तन्मूलतया वेदानुमानं वक्तव्यम् तच्च पूर्वोक्तरीत्या सर्वानुष्ठातृमात्रानुगत-विशेषरूपस्य प्राच्यादिपदेन बोधनं न सम्भवतीत्यशक्यम्। अतः अवधृतभ्रममूलप्राच्यत्वांशे वेदमूलकल्पनानुपपत्तेः होलाकादिमात्रे च मूलतया कल्प्यमानस्यायथार्थत्वम्। यथाकार्यं हि वैदिकं मानं कारणतया कल्प्यम्, प्रकृते च भ्रममूलप्राच्यत्वांशवतः कार्यस्य कल्पितप्राच्यत्वांशे न मानम्। एवञ्च यद्रूपकार्यपरं मानमुपस्थितं तद्रूपे न मानमार्हतीति अप्रमाणमनुमितचोदना, एतस्य च चोदनावाक्यस्याप्रामाण्ये तत्तुल्यतया सर्वेषामप्रामाण्यं प्राप्तमिति। सिद्धास्तु होलाकाद्याचारानुमितवेदस्य प्राच्यत्वादिपदरहितस्य प्रामाण्यमेव होलाकाद्याचारेभ्यः प्राच्यादिपदरहितान्येव होलाकाचारः कार्य इत्येवमादीन्येव वाक्यान्यनुमीयन्ते। यद्यपि प्राच्याद्यभिमानालिङ्गिताचाररूपं लिङ्गम् विशिष्टमेकं कार्यं तथापि तत्सांशमिति यावत्यंशे वेदस्य कारणत्वयोग्यता तत्परतयैव वैदिकस्य मानस्य कल्पनम् यथा गुर्वनुगमनादौ दृष्टार्थे नियमांशमात्रे वेदमूलत्वं कल्प्यते। तच्चानुमीयमानं वेदवाक्यात्मकं मानं होलाकादिमात्रपरमेव तत्रैव मूलमानस्य जिज्ञासितत्वान्नांशान्तरे प्राच्यत्वादावपि भ्रमदिदृष्टहेतोः क्लृप्तत्वेनादृष्टकारणान्तरजिज्ञासाभावात्। अतः यदि विशिष्टकार्यपरतया प्रच्यादिपदवद्वेदानुमानं स्यात्तदायथार्थत्वं स्यादिह तु होलाकादिमात्रपरतयैव वेदानुमानमिति अनुमेयो वेदो यत्परस्तत्र नायथार्थः। अतः होलाकाद्यनुमित-चोदना प्रमाणमेवेति कस्यापि चोदना वाक्यस्याप्रामाण्याभावात् विधिपादे साधितं चोदनानाः प्रामाण्यं सुस्थितमेवेति। एवञ्च भाट्टमते गुरुमते च होलाकाद्याचाराणां सर्वेषां कृते धर्मत्वमस्मिन्नधिकरणे प्रतिपादितम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्प्रति नवमाधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**गोगाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन।**
**नियमोऽत्रास्ति वा नास्ति व्याकृतेर्मूलवर्जनात्॥28॥**

**साधूनेव प्रयुञ्जीत गवाद्या एव साधवः।**
**इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः॥29॥**

**प्रकाशिका**

गोगाव्यादिषु गौ गावी गोता इत्यादिशब्देषु साधुत्वे = गौरिति शब्द एव साधुः न तु गावीति शब्दः साधु इति निश्चिते, प्रयोगे = साधुत्वाद्गोशब्द एव प्रयोक्तव्यो न तु गावीतिशब्द इति प्रयोगनियमे च कश्चन नियमोऽत्रास्ति न वेति सन्देहे, नास्ति = नियमद्वयमपि नास्ति; व्याकृतेः = व्याकरणस्य मूलवर्जनात् व्याकरणस्यात्र नियामकत्वेन स्वीकारो न सम्भवति यतः व्याकरणस्य किं मूलमिति विचारे प्रामाणिकमूलस्यादर्शनात् पूर्वोक्तनियमद्वयं न सम्भवतीति पूर्वपक्षे प्राप्ते साधूनेव प्रयुञ्जीत = साधुशब्दा एव प्रयोक्तव्याः, गवाद्या एव साधवः= गोशब्द एव साधुः न तु गावीशब्द इति नियमोऽस्ति; पूर्वपूर्वव्याकृतिमूलतः = अत उक्तनियमे व्याकरणं नियामकम्, व्याकरणस्य च पूर्वपूर्वव्याकरणमूलत्वेन प्रामाण्यं युज्यते इति सिद्धान्तः।

अयमाशयः–पूर्वाधिकरणे होलाकाद्याचाराणां प्रामाण्यं स्मृतिन्यायेन सिद्धं किं देशभेदेन व्यवस्थितमुत सर्वेषामेवेति अर्थात् प्रामाण्यस्यालोकवत्सर्व-पुरुषसाधारण्येऽपि होलाकाद्याचाराणां प्राच्यैरे- वानुष्ठीयमानानां श्रुत्यनुमानमुखेनैव प्रामाण्यस्य स्मृतिनये साधितत्वादनुमापकस्य नियतविषयत्वादत्रानुमेयश्रुतिरपि नियताधिकारिकैवेति प्राच्यैरेव तदनुष्ठेयमुत सर्वैरेवेति विश्ये सामर्थ्यान्निषेधव-शादुपपदाद्वा प्राच्यभिन्नोदीच्यादिव्यावृत्तकर्तृविशेषज्ञानासम्भवात्सर्वैरेवानुष्ठेयत्वं निर्णीतम्, अत्रापि प्रसङ्गाद्व्याकरणस्यापि स्मृतिनयेनैव प्रामाण्ये सिद्धेऽपि न व्याकरणस्य मूलभूता श्रुतिः सम्भवति न वेति गोगावीगोव्यादिशब्दा एकस्मिन्नर्थे प्रयुज्यमानाः किं सर्वे प्रयोक्तव्या उत व्याकरणानुगता एव प्रयोक्तव्या

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यधिकशङ्कानिवारणार्थमिदमधिकरणं प्रवृत्तम्। अत्रायं पूर्वपक्षः—यथा गोशब्दाद् गोपदार्थबोधो भवति तथैव गाव्यादिपदेभ्योऽपि गोपदार्थबोधो भवतीति लोकव्यवहारादेव ज्ञायते। शक्तिग्रहश्च प्रथमं व्यवहाराद्भवतीति च सर्वैः स्वीक्रियत एव। अतः "साधूनेव प्रयुञ्जीत नासाधून्" इति प्रयोगनियमो गवादय एव साधवो न गाव्यादय इति साधुत्वस्वरूपनियमो वा न सम्भवति। न च व्रीहीनवहनिन' इत्यवघातानियमस्यावघाते तत्कार्ये वा वितुषीभावे उपयोगासम्भवेऽपि तज्जन्ये यागापूर्वे उपयोगसम्भवस्तथात्रापि नियमः सम्भवतीतिवाच्यम् व्रीहीनवहन्नीति विहितस्यावघातस्य नियमे दर्शापूर्वस्य नियमकत्ववत् प्रकृते नियामकस्याभावात् अविहितत्वेनादृष्टार्थत्वस्याप्य-सम्भवात्। न च प्राङ्मुखे भुञ्जीत" इत्यत्र यथा रागप्राप्तत्वाद्भोजनस्य भोजनांशे न विधिरपि तु प्राङ्मुखत्वांशे विधिर्धर्माय भवतीति स्वीक्रियते तथैवात्राप्यर्थप्राप्तप्रयोगाश्रितः साधुनियमो धर्माय भवतीति स्वीक्रियते, तदुक्तं वार्तिककारैः कात्यायनैः—"सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिवैदिकेष्विति। अस्यायमर्थः शब्दश्चार्थश्च तयो सम्बन्धश्च तेष्वर्थात् शब्देऽर्थे तयोः सम्बन्धे च लोक एव प्रमाणमिति लोकत एवास्मिन्नर्थेऽयं शब्दः अनेन शब्देन चायमर्थो बोद्धव्य इति नियमे सिद्धे शास्त्रेणायमेव शब्दोऽस्मिन्नर्थे साधुः, इममेव शब्दं प्रयुञ्जीत इति नियमस्तु धर्माय भवतीति अत्र वार्त्तिककारैः धर्मनियम इति पदं प्रयुक्तम्, अस्यार्थः धर्माय नियम इति विग्रहेण वक्तुं न शक्यते" चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति विहितस्य चतुर्थीतत्पुरुषसमासस्य "तदर्थेन" प्रकृतिविकृतिभाव एवेति नियमेन अत्र प्रकृतिविकृतिभावाभावेन चतुर्थीसमा-सस्यासम्भवात् षष्ठीसमासमाश्रित्य धर्मस्य नियम इत्येवार्थो वक्तव्यः। सम्बन्धवाचकत्वात् षष्ठ्याः समबन्धसमान्यस्य विशेषापेक्षायां योग्यत्वात् तादर्थ्यलाभो भवतीति धर्माय शास्त्रेण व्याकरणेन साधुशब्दप्रयोगो नियम्यते। अतः धर्माय साधुशब्दनियम इति वाच्यम्, व्याकरणस्य प्रामाण्ये सिद्धे व्याकरणेन प्रतिपादितोऽयं नियमो धर्मायेति वक्तुं शक्यते तदेवाद्यापि न सिद्धम्। किञ्च धर्माय साधुशब्दप्रयोगः कार्य इति वक्तव्यञ्चेत् पाणिन्यादि-भिर्व्याकरणप्रणेतृभिः दृष्टार्थशब्दप्रयोगाश्रितसाधुनियमस्य धर्मार्थत्वं ज्ञात्वा प्रतीतिमिति वक्तव्यम्। तच्च न सम्भवति, तेषां तज्ज्ञानस्य प्रमाणान्त

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रेणासम्भवात्। चोदनालक्षणोऽर्थो धर्मः इत्यत्र धर्माधर्मयोः प्रमाणान्तरागम्यत्वस्य चोदनैकवेद्यत्वस्य निर्णीतत्वात्। तैः व्याकरणप्रणेतृभिः श्रुत्यैवायमर्थो ज्ञात इत्यपि वक्तुं न शक्यते, यतः तादृशश्रुतेरदर्शनात्। कल्प्यते चेत् किं वेदवाक्यानि तथाविधानि गवाश्वादिषु भेदेन कल्प्यन्ते उत केनचित्साधारणधर्मेण सर्वान्धर्मान् क्रोडीकृत्य गवाश्वादिशब्दविषयमेकमेव श्रुतिवाक्यं कल्प्यते? नाद्यः शब्दानामनन्तत्वेन गवाश्वादिषु भेदेन प्रतिपदपाठस्यासम्भवात्। महाभाष्यकारैरेव निराकृतत्वाच्च। तथाहि महाभाष्ये अनभ्युपायः शब्दनां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदविहितानां शब्दानां पारायणं प्रोवाच, नान्तं जगाम' इति। बृहस्पतिश्च वक्ता इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, न चान्तं जगाम, किं पुनरद्यत्वे गतायुषि प्रजायाम्" इत्यादि। "नाभ्युपेयः पदानां प्रतिपत्तौ प्रतिपदं पाठः इत्यतः निश्चीयते। न द्वितीयः केनचित्साधारणधर्मेण सर्वान्धर्मान् क्रोडीकृत्य गवाश्वादिविषयमेकं श्रुतिवाक्यं कल्प्यते चेत् तद्वाक्यं साधूनेव प्रयुञ्जीत नासाधून् इत्येवं साधुभिरभिदध्यान्नासाधुभिरित्येवं वा स्यात् तत्र च साधुत्वं जातिरुपाधिर्वेति वक्तव्यम् न तावज्जातिः साधुत्वम् योग्यवृत्तिजातेर्योग्यत्वात् प्रत्यक्षेण गृह्येत, यथा घटदर्शनकाले घटत्वजातिर्दृश्यते तथा साधुशब्दश्रवणकाले तन्निष्ठं साधुत्वमपि गृह्येत, तथासति महाशिवरात्रिः महाशिवरात्री इत्यादौ कः शब्दः साधु कश्च न साधुरिति साधुशब्दप्रयोगा धर्मायेति वदताम् अनधीतव्याकरणानां सन्देहो न स्यात्। नापि साधुत्वमुपाधिः निर्वक्तुमशक्यत्वात्। साधुत्वं हि वाचकत्वम् उतानादित्वमथवादृष्टसाधनत्वम्, इति त्रिष्वन्यतमं स्यात्, परन्तु एतत्त्रयमपि न सङ्गच्छते। वाचकत्वं चेत्तस्य गाव्यादिष्वप्यविशेषात् साधुरयं नायमिति नियमो न स्यात्। अत एवानादित्वमपि न युज्यते। अदृष्टसाधनत्वञ्चात्र धर्माय साधूनेव प्रयुञ्जीत इति नियमसिद्ध्यर्थं हीदं श्रुतिवाक्यं कल्प्यते, धर्मश्चादृष्टहेतुः, साधुशब्दस्याप्यदृष्टसाधनत्व-मित्यात्माश्रयापत्तिः। तदित्थम् अदृष्टसाधनभूतान् शब्दानदृष्टार्थं प्रयुञ्जीत इत्येवमुपलक्षणस्य प्रमेयस्य चैक्यादात्माश्रयः। अतः स्मृत्यधिकरणन्यायेन व्याकरणस्य मूलभूतश्रुतिकल्पनाया असम्भवात् प्रामाण्ये निरस्ते गाव्यादयो न साधवो गवादय एव साधव इति साधुत्वस्वरूपेऽपि नियमो न सम्भवतीति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गोगावीगोण्यादिशब्दाः सर्वे एकस्मिन् गवाद्यर्थे प्रामाणिकैः प्रयोक्तव्या इति

पूर्वपक्षः। अत्रैतावता निर्मूलत्वाद्व्याकरणं न प्रमाणमिति सिद्धम्। किञ्च वैयाकरणेष्वपि परस्परं विरोधदर्शनाद् 'विप्रतिषेधाच्चासमञ्जसम् इति न्यायेनापि व्याकरणमप्रमाणमिति ज्ञायते, तद्यथा-पाणिनिकात्यायनपतञ्जलिप्रणीतसूत्र-वार्त्तिकभाष्यसन्दर्भो हि व्याकरणमिति प्रसिद्धम्। त्रिमुनिव्याकरणमिति अभियुक्तैः स्वीकृतत्वात्। अत्र क्वचित् क्वचित् सूत्रकारवार्तिककार-भाष्यकारादीनां मतानां मध्ये वैमत्यं प्रतीयते। तुल्यास्यप्रयत्नं सवर्णम्" इति सूत्राज्ज्ञायते ऋकारलृकारयोः स्थानभेदात् सवर्णसंज्ञा सूत्रकाराणां नाभिमतम्। वार्त्तिके भाष्ये च ऋकारलृकारयोः सावर्ण्यविधिः कण्ठतः स्वीकृतः। अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् इति सूत्रे नप्त्रादिपरिगणनादन्यत्र पितरावित्यादौ दीर्घं सूत्रकाराणां नाभिमतमिति ज्ञायते। भाष्ये तु समर्थसूत्रे उद्गातार इति प्रश्युक्तं दृयते। अतः सूत्रवार्त्तिकभाष्याणां मध्ये परस्परं विरोधोऽस्तीति स्पष्टं भवति। अत एव विगीतत्वान्मूलाभावाच्च व्याकरणं निष्प्रयोजनम्। अर्थकाममोक्षाणां व्याकणस्य प्रयोजनत्वेन कथमपि स्वीकारो न युक्तः, धर्मस्य च प्रयोजनत्वं धर्माय साधुशब्दप्रयोग इति नियमस्यासम्भवस्योक्त्यैव न सिद्ध्यतीति व्याकरणं निष्प्रयोजनम्। अत एव सूत्रकारेणाप्यवश्यवक्तव्यं प्रयोजनमनुक्त्वैव सूत्रग्रन्थ आरब्धः। यद्यपि भाष्यकारैः[1] "रक्षोहागमलघ्वसन्देहाः प्रयोजनमि"-त्युक्तम् तत्र 1. देवान् प्रदुह उदग्राभं च निग्राभं चे" त्यादौ भाषायामविद्यमानं लोपागमविकारादिकं वैयाकरणो निश्चित्य सम्यग्विद्वान्परिपालयति नान्य इति वेदरक्षा व्याकरणप्रयोजनम्, 2. सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति विहिते सौर्यचरौ सूर्याय जुष्टमित्यूहः प्रयोजनम् 3. ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे" त्यागमोऽपि व्याकरणस्य प्रयोजनम्, अत्रागमेन धर्मज्ञानस्यैव व्याकरणाध्ययनप्रयोजनत्वाभिप्रायेणागमस्य व्याकरणप्रयोजनत्वम्, अथवात्र प्रयोजनशब्दः प्रयोजकपरः आगमोऽपि व्याकरणं धर्मायाध्येय्यत्वं बोधयतीति निष्प्रयोजनस्याध्ययनविधिविधेयत्वमनुपपत्तया व्याकरणस्य प्रयोजनवत्त्वं बोधयति। 4. एकेन लक्षणेन बहूनां शब्दानां ज्ञानं भवतीति प्रतिपदपाठापेक्षया लाघवमपि व्याकरणस्य प्रयोजनम्। 5. स्थूलपृषतीमनड्वाही-मालभेते-"त्यादौ कर्मधारयबहुव्रीहिसन्देहे पूर्वपदप्रकृतिस्वरेण बहुव्रीहिनिश्चयो

1. महाभारतम् 1.1.

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

· व्याकरणाभिज्ञस्यैव भवतीत्यसन्देहश्च प्रयोजनम् एवं व्याकरणस्य प्राधान्येन पञ्च प्रयोजनान्युक्तानि, तथापि एतानि त्रिमुनिव्याकरणाध्ययनेन विनापि सिद्ध्यन्ति। तद्यथा वेदतदर्थाभिज्ञगुरुशिष्यपरम्परयैव वेदपाठक्रमस्येव वेदस्यापि रक्षा सङ्गच्छते, सौर्यचर्वादौ चाग्नय इत्यस्य स्थाने सूर्यवाचकचतुर्थ्यन्त ऊहितव्य इति मीमांसया सिद्धे चतुर्थ्यन्तसूर्यपदस्य सूर्यायेति रूपस्य ज्ञानं लोकादेव भवतीति ऊहोऽन्यथासिद्धः। आगमोऽपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गः महाभाष्योक्तः स्पष्टं व्याकरणस्य प्रयोजनवत्त्वं न प्रतिपादयति षडङ्गशब्दश्च श्रुतिलिङ्गादिषट्प्रमाणपरत्वेनान्यथासिद्धः। स्थूलपृषतीत्यादौ कर्मधारयबहुव्रीहिसमाससन्देहजनितपदार्थसन्देहोऽपि यथा शिष्याचार्य-सम्प्रदायादेव पूर्वपदप्रकृतिस्वरादिबोधो भवति तथैव स्वरवदर्थविशेषस्याप्यव-गतिर्भवितुमर्हतीति विनापि व्याकरणेनासन्देहः सिद्ध्यतीत्यन्यथासिद्धः। एवञ्च निर्मूलत्वाद्विगीतत्वान्निष्प्रयोजनत्वाद्व्याकरणमप्रमाणम्। किञ्च वेदविरुद्धत्वाच्च व्याकरणं न प्रमाणम्। तथाहि व्याकरणे दृष्टं साम इत्यधिकारे कलेर्ढक् वामदेवाड्ड्यड्यौ सूत्रे पठिते तेनेदं ज्ञायते कलिना दृष्टं कालेयम्, वामदेवेन दृष्टं वामदेव्यमित्यर्थो भवति। वेदे तु ताण्ड्यब्राह्मणे यदकालयत् तत्कालेय-स्य कालेयत्वम्" आपो वा ऋत्वियमार्द्धन् तासां वायुः पृष्ठे व्यवर्तत, ततो वामं वसु समभवत् तन्मित्रावरुणौ पर्यपश्यताम्। तावब्रूतां वामं मर्त्यमिदं देवेभ्योऽजनि तस्माद् वामदेव्यम् इत्यर्थवादः श्रूयते। अत्रार्थवादेन कालेयशब्दस्यासुरोत्कालक्रियानिमित्तत्त्वम्, वामदेव्यशब्दस्य च वामं देवेष्विति समभिव्याहृतपदद्वयोच्चारणक्रियानिमित्तत्वं प्रतीयेते। अतः व्याकरणं वेदेन स्वतः प्रमाणभूतेन विरोधान्न प्रमाणम्। किञ्च पूर्वापरविरोधाच्च व्याकरणं न प्रमाणम्। पूर्वं विगीतत्वमिति पाणिनिकात्यायनपतञ्जलिकृतसूत्रवार्तिक-भाष्यग्रन्थानां मध्ये परस्परं विरोधो दर्शितः। अत्र तु सूत्रेष्वेव पूर्वापरविरोधोऽभिप्रेतः। तद्यथा—"चो कु" इति पदान्ते चवर्गस्य कवर्गो विहितः पुनः प्रथमे सूत्रे वृद्धिरादैच्" इति सूत्रे सूत्रकारेणैव स नियमस्त्यक्तः। वार्त्तिके सिद्धे शब्दार्थसम्बन्धे इत्यादौ अर्थप्रयुक्तानां शब्दानां व्याकरणं प्रतिज्ञातम्, परन्तु स्फोटवादस्वीकाराद् अखडमेव वाक्यम् न पदसमूहात्मकमतः वाक्यमेव तथेष्टम्। वाक्ये पदानि चानर्थकान्येव। तदुक्तं श्रीहरिकारिकायाम्-ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्युरनर्थका इति। इतः यथा प्रतिज्ञां वाक्यमेव संस्कार्यम् परन्तु तदव्याकरणात्पदव्याकरणाच्च पूर्वापरविरोधः। वाक्ये पदानामानर्थक्यमिष्टमिति पदद्वारा व्याकरणं वाक्यस्य संस्काराधायकमित्यपि वक्तुं न शक्यते। अतः पूर्वापरविरोधः स्फुटो भवति। पूर्वं सूत्रवार्तिकभाष्येष्वेवपरस्परं विरोधः विगीतत्वहेतुनोक्तः अत्र तु टीको ग्रन्थेष्वपि विरोधोऽस्तीति, हरिकारिकाद्य-वलोकनेन स्पष्टं भवति। उभयशब्दस्य द्विवचनं नास्तीति कैयटः अस्तीति हरदत्तः, रप्रत्याहारस्य प्रामाण्यविषये च वैय्याकरणानां कलहः प्रसिद्ध एव। तदुक्तं भट्टाचार्यैः सूत्रवार्तिकभाष्यकारवदेव पूर्वापरविरुद्धमभिद-धानैष्टीकाकारैरपि सुतरां व्याकरणस्याप्रत्ययितपुरुषाणीतत्वं दर्शितम्।" इति अतो विगानभूयिष्ठाद्विरुद्धान्मूलवर्जितात्। निष्फलत्वाद् व्यवस्थानं शब्दानां नानुशासनात्।। इति च। शास्त्रदीपिकायाञ्च व्याकरणस्याप्रामाण्ये उक्ता एव हेतवः श्लोकेन प्रतिपाद्यन्ते "निर्मूलत्वाद्विगीतत्वान्नैष्फल्या- द्वेदबाधनात् पूर्वापरविरोधाच्च नास्य प्रामाण्यसम्भवः।।' इति। एवञ्च गवादय एव साधवो न गाव्यादय इति निर्णये व्याकरणप्रामाण्याभावात् सर्वे गवादयः गाव्यादयश्च शब्दाः यथेष्टं प्रयोक्तव्याः इति सिद्ध्यति। अत्र चानुमानं वक्तुं शक्यते–गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः वृद्धैस्तत्र प्रयुक्तत्वाद् गौरुस्रेत्येवमादिवदिति। एवं पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते– स्मृत्यधिकरणन्यायेन श्रुतिमूलतया व्याकरणस्य प्रामाण्ये सिद्धे साधव एव शब्दाः प्रयोक्तव्याः गवादय एव साधवो न गाव्यादय इति नियमद्वयं व्याकरणेन बोध्यते। अत्र प्रयोगनियमोऽदृष्टार्थः वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः "इति वैय्याकरणैः स्वीकारात्। प्रयोगनियमे च मन्वादिस्मृतिवत्प्रत्ययिततमपाणिन्यादिप्रणीतत्वान्मूलश्रुत्यनुमानं सुलभम्। प्रत्यक्षञ्च वाजसनेयशाखादिषु श्रूयते–"ब्राह्मणेन न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्द इत्यादि। म्लेच्छित्वे इत्यत्र कृत्यार्थे तवैकेन्केन्यत्वनः इत्यनेन सूत्रेण कर्मणि तवै प्रत्ययः। प्रकृतिभूतम्लेच्छधातोर्विवरणम् म्लेच्छो ह वा इति श्रुत्यैव क्रियते। तथाच ब्राह्मणेनापशब्दो न प्रयोक्तव्य इत्यर्थो लभ्यते। तैत्तिरीयके चश्रूयते वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवेष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्याकृता वागुद्यते" इति। अस्यायमर्थः वाक्पराची एकरूपा अव्याकृता साध्वसाधुविवेचनशून्या, अवदत् = अभवत् देवाश्चेन्द्रं नो अस्माकं वाचमिमां व्याकुर्विति अब्रुवन्, एवं देवैरुक्त इन्द्रः यागे मह्यमिन्द्राय वायवे च सह गृह्याता ऐन्द्रवायवग्रहो भवतु इति प्रत्युक्तः अतः यागे एन्द्रवायवग्रहो भवति, ततः इन्द्रः तां वाचम् मध्यतः=शरीरस्य मध्यम् उरः कण्ठादिकं प्रदेशमवक्रम्य व्याकरोत्=साधुतया विभक्तवान्। तस्मादियं व्याकृता साधुतया विभक्ता उद्यते प्रयुज्यत इत्यर्थः। अनया श्रुत्या व्याकृता संस्कृता एव शब्दा इन्द्रस्य प्रिया इति बोधेनार्थात् साधव एव शब्दाः प्रयोक्तव्याः, व्याकरणेन व्युत्पादिता एव साधव इति नियमद्वयं सिद्ध्यति। महाभाष्यकारैः "आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति साक्षाद्विधिरेवोदाहृतः। अनेन विधिना साधुशब्दप्रयोगनियमो धर्मायेति ज्ञायते। अत्र मध्यतोऽवक्रम्य व्याकरोदिति श्रुत्युक्त एवार्थः पाणिनीयशिक्षायां विवृत इति प्रतीयते आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृता इति। आत्मा संस्काररूपेण स्वगतार्थान् बुद्ध्या समेत्य एकीकृत्य तद्बोधनेच्छया युक्तं मनः करोति। अर्थं बुद्ध्वा शब्दरचना इति न्यायोऽप्यत्र सङ्गतो भवति। तन्मनः कायाग्निं जाठराग्निमभिहन्ति सः अग्निः मारुतं प्रेरयति। सोदीर्णः स उदीर्णः सोऽचि लोपे चेत्पादपूरणम् इति सुलोपः चेत्पादपूरणम् इति सुलोपः मारुत उदीर्णः ऊर्ध्वं प्रेरितो मूध्न्यभिहतः परावृत्य वक्त्रं ताल्वादिस्थानं प्राप्य वर्णानभिव्यनक्ति। वर्णानां नित्यत्वात् यत्नविशेषसहायः ताल्वादितत्तत्स्थानेषु जिह्वाग्रादिस्पशपूर्वकमभिहतो मारुतो वर्णविशेषमभिव्यनक्ति न तूत्पादयति। एवञ्च प्रयत्नैर्वर्णाः यथावदभिव्यज्यन्ते। प्रयत्नशैथिल्यञ्चापशब्दान्प्रवर्तयति। एतदिष्टशब्दविशेषाभिल्यञ्जकप्रयत्नविशेषज्ञानं व्याकरणात् सुलभम्। अतः श्रुतिविहितैः प्रयोगनियमपरैः वाक्यैरर्थप्रत्यायनरूपदृष्टार्थं शब्दप्रयोगमाश्रित्य "एकः शब्दः सुष्ठु ज्ञातः सम्यक्प्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति नियमोऽभ्युदयाय व्याकरणेन भोजनं रागतः प्राप्तमाश्रित्य आयुष्यं प्राङ्मुखो भुङ्क्ते इति नियमवत् विधीयते। न च शब्दानन्त्यात् व्याकरणस्य प्रामाण्यायानन्तवाक्यानां कल्पना न सम्भवतीति वाच्यम्। अनन्तवाक्यानां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कल्पनाया असम्भवेऽपि साधूनेव प्रयुञ्जीत" नासाधून् इति वाक्याभ्यामेव सकलशब्दापशब्दप्रयोगविधिप्रतिषेधसिद्धेर्नानन्तवाक्यानां कल्पनाया अनवतारात् श्रुतिमूलतया व्याकरणस्य प्रामाण्यं निर्बाधम्। यत्तूक्तम् साधुत्वं जातिरुपाधिर्वेति विकल्पे उभयथापि निर्वचनं न सम्भवतीति अत्रोच्यते साधुत्वं न जातिः किन्तु उपाधिः अनादित्वे सत्यर्थप्रत्यायकत्वमिति तस्य निर्वचनं सम्भवत्येव। अर्थप्रत्यायकत्वञ्च गाव्यादिशब्देष्वप्यस्तीति अनादित्वं विशेषणम्। नचानादित्वमपि तेष्वस्तीति वाच्यम् तेषामनादित्वाभावात्। यतः आदौ कदाचित् केनचित् गामानयेति प्रयोक्तव्ये प्रयत्नशैथिल्यात् करणापाटवादिना गावीमानयेति प्रयुक्तम्, श्रोता पण्डितः कश्चन गोशब्दं प्रयोक्तुमुद्यतस्य अशक्तिजोऽयं शब्द इति निश्चित्य सास्नादिमदर्थमेवानीतवान्। तत्रैतदुभयव्यवहारं पश्यन्तः व्युत्पित्सवः अशक्तिजत्वमजानाना गावीशब्दस्यैव सास्नादिमदर्थे संज्ञासंज्ञिसम्बन्धं व्युत्पाद्य व्यवहरन्ति, तेभ्यश्च शिक्षिता अन्ये तेभ्यश्चान्येऽपीत्येवं प्रयोगप्रत्यययोः प्रयोक्तृपुरुषकरणापाटवदोषजन्यतया गाव्यादिशब्दानामनादित्वं न सिद्ध्यति। न चैवं कल्पनायां किं मानम्? विनिगमने वा को हेतुः? गाव्यादिशब्दानामप्यनादित्वे सत्येर्थप्रत्यायकत्वेन साधुत्वमेव भवत्विति वाच्यम् "अन्यायश्चानेकशब्दत्वम्" इति न्यायेन एकः साधुशब्द इतरः अपभ्रष्ट इति वक्तव्यम्, अत्रैकस्यार्थस्यानेकशब्दवाच्यत्वं न युक्तमिति तस्यैकस्यार्थस्य सास्नादिमदर्थस्य अनेकवाच्यत्वम् गोगावीत्यादि-शब्दवाच्यत्वं न युक्तमत तत्रैकः गोशब्दः अनादित्वे सति अर्थप्रत्यायकत्वात् साधुशब्दः अन्ये च गावीत्यादिशब्दाः कथञ्चिदर्थप्रत्यायकाः सन्तोऽपि प्रयोक्तृपुरुषाशक्तिजाः असाधुशब्दा इति निर्णीयते। अदृष्टानेकशक्ति-कल्पनापेक्षया प्रयोक्तृपुरुषाशक्तिजत्वस्यैव दृष्टस्य गाव्यादिशब्देषु कल्पयितुमुचितत्वात्, सर्वेषां गोगाव्यादीनां साधुशब्दत्वे प्रयोगवेलायामष्टदोष-दुष्टविकल्पापतेश्च। सर्वत्र प्रायः विकल्पस्थले मीमांसका अष्टौ दोषान्वर्णयन्ति। तद्यथा दर्शपूर्णमासाक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया परस्परानपेक्षौ व्रीहियवौ विहितौ, शक्नुतश्चैतौ प्रत्येकं पुरोडाशमभिनिर्वर्तयितुम्। तत्र यदि उभयोर्मिश्रणेन पुरोडशोऽभिनिर्वर्त्येत परस्परानपेक्षव्रीहियवविधातृणी उभे अपि शास्त्रे बाध्येयाताम्। अतः प्रयोगवेलायां विकल्प आश्रयणीयो भवति, आश्रिते च विकल्पे अष्टौ दोषाः भवन्ति—प्रथमं व्रीह्यनुष्ठाने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यवशास्त्रस्य प्रतीतप्रामाण्यपरित्यागः 2. अप्रतीताप्रामाण्यस्वीकारः 3. प्रयोगान्तरे यवेषूपादीयमानेषु यवशास्त्रस्य प्राक्स्वीकृताप्रामाण्यत्यागः 4. परित्यक्त-प्रामाण्योपदानम्। यवशास्त्रे एवं चत्वारो दोषाः। एवं द्वितीयप्रयोगे यवानुष्ठाने 1. व्रीहिशास्त्रस्य प्रतीतप्रामाण्यपरित्याग 2. अप्रतीताप्रामाण्यस्वीकारः। पुनः प्रयोगान्तरे व्रीहीषूपादीयमानेषु 3. व्रीहिशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागः 4. परित्यक्तप्रामाण्यस्वीकारः इति व्रीहिशास्त्रे चत्वारो दोषाः। तदेवं प्रयोगत्रयेण यवशास्त्रे चत्वारो दोषाः व्रीहिशास्त्रे च चत्वारो दोषा इत्यष्टौ दोषाः। तदुक्तं वार्त्तिके एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यते। इति। प्रकृते एवमेव सास्नादिमदर्थस्यैकस्य गोगाव्यदिबहुभिः शब्दैः बोधो भवति चेत् प्रयोगवेलायामवृदोषदुष्टविकल्पापत्तिः। व्रीहिभिः यवैर्वेत्यत्र तु वाक्यद्वयबलाद् दोषेषु सत्स्वपि विकल्प आश्रयणीय एवेत्यन्या वार्ता। अतः गोशब्द एवानादित्वे सत्यर्थप्रत्यायकः गाव्यादिशब्दास्तु सन्तोप्यर्थप्रत्यायका अनादित्वाभावाद् विशेषणाभावप्रयुक्तविशिष्टाभावोऽस्तीति न साधवः किन्त्वपभृष्टा एव। किञ्च वाच्यवाचकयोरैककर्म्यावधारितस्य नियमस्य गोगाव्यादीनां सर्वेषामर्थप्रत्यायकानामनादित्वेन साधुशब्दत्वमस्तीति स्वीकारे बाधः स्यात्। तथा हि गोशब्देन सास्नदिमदर्थोऽभिधीयते इत्याप्तवाक्याद्वाचकत्वग्रहदशायामभिधानक्रियाद्वारा तत्कर्मकरणयोर्वाच्य-वाचकयोः "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्याद् इति अरुणाधिकरणन्यायेन क्रयद्वारा एकहायन्यारुणिम्नोरिव परस्परान्वयरूपः सम्बन्धोऽवगम्यते। इदानीं गाव्यादिशब्दैरपि सास्नादिमदर्थो बोध्यते इति स्वीकारे सास्नादिमत्कर्मकाभिधान- क्रियायां गोशब्द एव करणमित्येवंरूपस्य नियमस्य व्युत्पत्तिकालावगतस्य बाधः स्यात्। अतः गोशब्द एव साधुः गाव्यादीनान्तु पुरुषाशक्तिजतया अनादित्वाभावात् गोशब्दोपस्थापन-द्वारैवार्थप्रत्यायकता। हस्तपाणिकरादिशब्देषु त्वगत्यानेकशब्दैरप्येकार्थबोधो भवतीति स्वीक्रियते। अनादित्वं गोशब्द एवास्ति न तु गाव्यादिशब्देष्वित्यत्र विनिगमकं व्याकरणमेव। एवञ्चानादित्वे सत्यर्थप्रत्यायकत्वं साधुत्वं तद्विपर्ययश्चासाधुत्वम्। गाव्यादिषु अतिप्रसङ्गवारणार्थं सत्यन्तम्। हुंफडादिस्तोभेषु पादपूररणाद्यर्थं प्रयुज्यमानेषु तु हि च सम इत्याद्यव्ययेषु अतिप्रसङ्गवारणार्थं विशेष्यमर्थप्रत्याकत्वम्। न चाधुनिकीषु देवदत्तादिसंज्ञासु पाणिन्यादिमहर्षिभिः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वशास्त्रे प्रयुक्तासुटिघुभादिसंज्ञासु अनादित्वाभावात्कथं साधुत्वं सङ्गच्छत इति वाच्यम्; "द्वादशेऽहनि पिता नाम कुर्यात्" इति श्रुते सामान्यविधिना पुत्रत्वोपाधिनैव देवदत्तादिशब्दानां सङ्केतकरणेन अनादिविधिप्रयुक्तत्वात् देवदत्तादिव्यक्तिविशेषबोधकत्वात् अनादित्वे सत्यर्थप्रत्यायकत्वं साधुत्वं सङ्गच्छत एव। न चानादिविधिप्रयुक्तत्वेन यागादीनामप्यनादित्वं स्यादिति वाच्यम्; इष्टापत्तेः। यागसामान्यस्यानादिविधि- प्रयुक्तत्वेनानादित्वेऽपि यागविशेषस्य भाव्यत्वेन धर्मस्य भाव्यत्वमुपपद्यते। तदुक्तं श्रीहरिणा- पुत्रादिनामकरणे गृह्येषु नियमश्रुतेः। अनादिशक्तितासंज्ञास्वपि नैव विरुध्यते।। इति। पाणिन्यादिमहर्षिभिः स्वशास्त्रे प्रणीतासु टिघुभादि- संज्ञास्वपि गतिरियमेव। व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्। नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत्। इति गोत्रसंज्ञासूत्रभाष्ये कैयटसंमते पक्षे टिघुभादिसंज्ञानामप्यनादित्वात्। अत एव भगवान् पाणिनिः टित आत्मनेपदानां टेरे:"। इत्यादिसूत्रेषु "टेः" इति षष्ठ्यन्तं पदं प्रयुक्तवान्, तेषां साधुत्वाभावे षष्ठ्यन्तत्वं नोपपद्येत। अथवा मास्तु संज्ञावाचकानां साधुत्वम् अतः संज्ञावाचकेषु अनादित्वाभावेऽपि न दोषः, तेषामलक्ष्यत्वात्। शास्त्रकारैरयमपि पक्षः स्वीकृत एव। तथाहि-"यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः। अनपभ्रंशरूपत्वान्नास्त्यासामपशब्दता। हस्तचेष्टा यथा लोके तथा सङ्केतिता मताः। नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत्।। इति अत्र हस्तचेष्टया यथा व्यवहारो भवति तथैव संज्ञाभिरपि व्यवहारो भवत्येव, नैतावता तेषां साधुत्वमसाधुत्वं वेति विवेचनमर्हति, नैयायिकानां निर्विकल्पकज्ञानं यथा भ्रमप्रमाबहिर्भूतं तथैव संज्ञावाचकानां शब्दानां साध्वसाधकोटिद्वयबहिर्भूतत्वात्तेषु लक्षणसमन्वयाभावेऽपि नाव्याप्तिः। एवञ्च संज्ञावाचकानां साध्वसाधु- कोट्यन्तर्भावपक्षे बहिर्भावपक्षे चानादित्वे सत्यर्थप्रत्यायकत्वं साधुत्वम्, अयमेव अनादित्वे सत्यर्थप्रत्यायकोऽयं नेति निर्णये व्याकरणमेव प्रमाणमिति गवादिशब्दा एव साधवो न गाव्यादिशब्द इति शब्दस्वरूपनियमः, साधूनेव प्रयुञ्जीत नासाधूनित्यदृष्टार्थः प्रयोगनियम इत्युभयविधोऽपि नियमो व्याकरणगम्यः। अतः स्मृत्यधिकरणनयेन सिद्धं व्याकरणस्य प्रामाण्यं सुस्थितम्। मीमांसाकौस्तुभे तु प्रमितया वृत्त्यार्थप्रतिपादकत्वं साधुत्वं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदभावोऽसाधुत्वम्। वृत्तिश्च शक्तिलक्षणागौण्यन्यतमरूपेति साधुत्वा-साधुत्वयोर्निर्वचनं दर्शितम्। गाव्यादिषु प्रमितवृत्त्यार्थप्रत्याकत्वाभावान्नाति-व्याप्तिरितीदमपि लक्षणं सङ्गच्छते, अत्रापि कः शब्दः प्रमितया वृत्त्यार्थ-प्रत्यायकः कश्च नेत्यत्र व्याकरणमेव शरणम्। एवञ्च निर्मूलत्वान्नैष्फल्या-द्व्याकरणं न प्रमाणमितिहेतुद्वयं निरस्तम्। इदानीमयं शब्दः साधुरयं नेति निर्णये प्रत्यक्षं व्याकरणं प्रमाणम् व्याकरणस्य च व्याकरणान्तरं मूलम्, तस्य च व्याकरणान्तरमिति वेदाङ्गत्वेनानादिपरम्परा निश्चीयते, व्याकरणस्य वेदाङ्गत्वं वेदेनैव बोधितम् "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापराच। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। महाभाष्ये रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति पञ्च मुख्यप्रयोजनान्युक्तानि तान्यपि अनादिपरम्परया समायातैः व्याकरणनियमैरेव सिद्ध्यन्तीति स्वीकारो युक्त एव। यदपि चोक्तं वेदतदर्थाभिज्ञगुरुशिष्यपरम्परयैव स्वरवदर्थविशेषस्याप्यवगतिसम्भवाद् रक्षोहाद्यर्थं व्याकरणं नापेक्षितमिति, तत्रोच्यते गुरुशिष्यपरम्परयापि कञ्चन नियममाश्रित्यैव स्वरवदर्थविशेषस्य वक्तव्यत्वात् यो नियमस्तदर्थमाश्रीयते स एव नियमो गुरुशिष्यपरम्परायानादिकालतः प्राप्तः आचार्यपाणिनिप्रभृतिभिर्व्याकरणरूपेण निबद्ध एवेति व्याकरणस्योक्तप्रयोजनवत्त्वं सर्वथापि सिद्ध्यति यच्चोक्तं विगीतत्वाद् व्याकरणं न प्रमाणमिति तत्रोच्यते–"तुल्यास्यप्रयत्नं सवर्णम् इति पाणिनिः ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् इति कात्यायनः अतः त्रिमुनिव्याकरणमिति प्रसिद्धेः परस्परविरोधः "यथोत्तरं मुनीनां प्रामाण्यमिति वैय्याकरणसमयः पूर्वपूर्वस्याप्रामाण्यमेंव सर्ववेष्टस्मृतिवत्,अविरोधे तु प्रामाण्यमिति व्यावस्थायाः सम्भवात् पाणिन्याद्याचार्येषु मिथो विरोधदर्शनेन व्याकरणस्याप्रामाण्यं नैव सिद्ध्यति। एतेनेदमप्यपास्तम्–"चोः कु" इति पदान्तस्य चवर्गस्य कवर्गं शास्ति पाणिनिः पुनः "वृद्धिरादैच् इति तन्नियमं नानुसरतीति पूर्वोत्तरविरोधाद्व्याकरणं न प्रमाणमिति, आदैच् इति निर्देशादेव कुत्वशास्त्रं तद्व्यतिरिक्तविषयमिति "पुरोडाशं चतुर्धा करोति "आग्नेयं चतुर्धा करोति इति वाक्ययोः पर्यालोचनया यथा पुरोडाशमात्रस्य चतुर्धाकरणस्य आग्नेयवाक्येनाग्नीषोमीयादिभिन्नाग्नेयस्यैव चतुर्धाकरणं निश्चीयते तद्वदत्रापि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्यावस्थायाः सम्भवादनेन व्याकरणस्याप्रामाण्यं नैव सिद्ध्यति। यदपि चोक्तम् "कलेर्ढक्" इति कलिना दृष्टामित्यर्थे कालेयशब्दं व्युत्पादयति पाणिनिः, वेदे तु "यदकालयद्" इत्यादिना कालनक्रियां निमित्तीकृत्य कालेयशब्दो व्युत्पादितः, अतः वेदविरुद्धत्वाद्व्याकरणं न प्रमाणम्; अत्रोच्यते अत्र वेदे कालेयशब्दस्य अर्थः अयमेवेति नोच्यते, वाक्यस्यास्यार्थवादरूपत्वात्। अन्यथा "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" इत्यादौ अर्थवादविरोधेन रजतशब्दस्य रूढार्थस्यापि विरोधः स्यात्तेन च लोकवेदाधिकरणस्यापि विरोधः स्यात्। एवञ्च व्याकरणस्य प्रामाण्ये वेदविरोधो नास्ति, अपि तु "उत त्वः पश्यन्न ददर्श वाचमुत त्वःशृण्वन्नशृणोत्येनाम्। उतो त्वस्मै तन्वांविसस्त्रे जायेव पत्य उशती सुवासाः।। सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रतः। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि।। इत्यादिमन्त्रेषु शब्दाभिज्ञस्य स्तुतिः तदनभिज्ञस्य निन्दा च श्रूयते इति व्याकरणस्य प्रामाण्यमेव श्रुतिरावेदयतीति ज्ञायते। एवञ्च "अनादित्वात्समूल-त्वात् साफल्यात् श्रुतिशंसनात्।। स्मृतिन्यायात्प्रमाणं स्याद् ध्रुवं व्याकरणं स्मृत्।। इति सिद्धान्तः।

अस्मिन्नधिकरणे गुरुमतं निरूप्यते–

## जैमिनीयन्यायमाला

**अश्वालम्भनशास्त्रस्य दन्त्यतालव्यसंशयात्।**
**अमात्वेऽदन्त्यनिर्णीतिराप्तोक्तव्याकृतेर्बलात्।।30।।**

## प्रकाशिका

अश्वालम्भनशास्त्रस्य = अश्वमालभेत" इति विधौ, दन्त्यताल-व्यसंशयात् = अश्वशब्दे शकार दन्त्यः तालव्यो वेति संशयसम्भवाद् अमात्वे = अप्रमाणं निश्चितार्थबोधकत्वाभावादिति पूर्वपक्षे प्राप्ते अदन्त्यनिर्णीतिः = अश्वशब्दे शकारः दन्त्यो नास्त्यापि तु तालव्य एवेति निश्चयः अप्तोक्तव्याकृतेर्बलात्= वैदिकपरिगृहीतव्याकरणस्मृतिप्रमाणेन भवितुमर्हतीति उक्तविधिवाक्यं निश्चितार्थबोधकं सत् प्रमाणमेव।

अयमाशयः–चोदनाप्रामाण्यनिरूपणपरेऽत्राध्याये पदपदार्थयो-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

र्नियामिकाया व्याकरणस्मृत्या निर्मूलत्वे वैदिकाश्वादिपदानां हयाद्यर्थनिश्चयो न सम्भवति अश्वशब्दस्य हये निःस्वे च प्रयोगादिति चोदनाप्रामाण्याक्षेप-सम्भवाद्व्याकरणस्मृतीनां प्रामाण्याप्रामाण्यविचारो युक्त इति प्रथमाध्यायेन सह सङ्गतिः। स्मृतिप्रामाण्यविचाररूपत्वात् तृतीयेन स्मृतिपादेनापि सङ्गतिः। धर्मस्मृत्यादिमुखमप्रामाण्यमन्तरङ्गं निरस्य पदपदार्थस्मृतिनिर्मूलतोत्थं वार्यत इति पूर्वाधिकरणेन सह सङ्गतिरिति सङ्गतित्रयम्। पूर्वपक्षस्तु यथा शाब्दस्मृतिरूपव्याकरणस्य गवादिशब्दानामनादित्वगमकत्वं सिद्धान्तिना स्वीक्रियते तथैव वृद्धप्रयोगपरम्पराया अपि सङ्केतदर्शनाभावे प्रयोगानादिता-गमकत्वं युक्तमिति "औत्पत्तिकाधिकरणे शब्दार्थयोः सम्बन्धस्य नित्यत्वस्य साधनादेव सिद्धम्, वृद्धप्रयोगपरम्पराविषयत्वञ्च गाव्यादेरपीति गवादय एव साधवो न गाव्यादय इति नियमस्मृतिरूपव्याकरणं न प्रयोगमूलमिति निर्मूलत्वान्न प्रमाणमतः हये निःस्वे चाश्वशब्दस्य प्रयोगानादित्वे तुल्ये नियामकान्तराभावात् "अश्वमालभेत" इत्यादिविधौ दन्त्यतालव्यसंशयाद् शब्दे तद्वतितचोदनायाः प्रामाण्यमपि सन्दिग्धम्। व्याकरणस्मृतेः स्वोक्तार्थ-व्यवस्थापनशक्त्यभावादनियतार्थत्वाच्चाप्रामाण्यमिति पूर्वपक्षः।

सिद्धान्तस्तु-आदिमतापि व्यवहारः सिद्ध्यतीति गवादयो गाव्यादश्च सर्वे साधवः, अनादिमत्वादिति वक्तुं न शक्यते। अनेकशब्दानामेकस्मिन्नर्थेऽना-दित्त्वमन्याय्यम्। तत्र गवादय एव साधवः, अनादयः अपुंप्रभवाः, गाव्यादयस्तु असाधवः आदिमन्ताः, पुरुषाभिप्रायभ्रमाशक्तिप्रमादजाः पुंप्रभवाः इति नियमे किमपि प्रमाणमपेक्षते तदेव व्याकरणमविगीतमहाजनादृतत्वेन प्रमाणम् अत एव समूलम्, अत एव च नियतविषयमिति निश्चीयते। गवादीनान्त्व-पुंप्रभवत्त्वम्, पुंप्रभवता च त्रिधा-सङ्केतिते पाणिनिप्रयुक्ते नद्यादिसंज्ञाभेदे अभिप्रायप्रभवता, स्मृत्यर्थाविवेके भ्रमप्रभवता, उच्चारणवैगुण्ये चाशक्तिप्रमाद-प्रभवतेति। गाव्यादिशब्दास्तु कदाचिदुच्चारणवैगुण्याद् गवादिशब्देषु प्रयोक्तव्येषु अशक्तिप्रमादप्रभवाः स्मृत्यर्थाविवेकाद्भ्रमप्रभवा वेति सर्वथापि सादित्वं तेषां युक्तम्। गवादिशब्दानां विषये तु पाणिन्यादिवैदिकमुनिप्रणीतस्मृतिपरम्परा अविगीतमहाजनादृतत्वेन दृढा स्वविषयतया प्रयोगानादित्वमुपस्थापयति। कारणतया स्वेन सम्बन्धं नित्यानुमेयप्रयोगादित्वमनुमापयति धर्मस्मृतिरिव

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेदम्।

अत्रैवं प्रयोग—शाब्दस्मृतिः गवादिप्रयोगानादिताज्ञानपूर्विका तद्विषयाप्तवाक्यत्वात्। यद्यद् विषयकमाप्तवाक्यं तत्तज्ज्ञानपूर्वकं यथा नदीतीरादिवाक्यम्। एवं स्मृतिलिङ्गानुमानेन गवादिशब्दानामनादित्वज्ञानम्। अयं न्यायः व्याकरणस्य प्रामाण्येऽप्यवतरति, व्याकरणस्मृतिरियं स्वयं पूर्वतनव्याकरणस्मृतिज्ञानपूर्विका व्याकरणस्मृतित्वाद् शिष्टपरिगृहीतत्वाद्वा व्याकरणस्मृत्यन्तरवदिति। स्मृत्यन्तरलिङ्गकानुमानात् स्मृत्यन्तरकर्तुरपि तथेति नान्धपरम्परादोषः। एवञ्च व्याकरणस्मृतीनां प्रवाहनित्यतया निर्मूलत्वं नास्त्यपितु समूलत्वमेव, अत एव व्याकरणस्मृतिः प्रमाणमत एव च साध्वसाधुविवेकक्षमा भवति, ततश्च व्याकरणस्मृत्या सास्नादिमति गोशब्द एव साधुरिति निश्चीयते, एवं "अश्वमालभेत" इत्यत्राश्वशब्दः तालव्यशकारघटितः हयवाचक इति निर्णयसम्भवाच्चोदना प्रमाणमेवेति सिद्धं भवति।

अग्रिमाधिकरणं निरूप्यते—अस्मिन्नधिकरणे वर्णकद्वयम् प्रथमं वर्णकं लोकवेदाधिकरणम्, द्वितीयञ्चाकृत्यधिकरणम्। प्रथमं वर्णकं निरूप्यते—

## जैमिनीयन्यायमाला

**लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ।**
**रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा॥31॥**

**वर्णैकत्वात् पदैकत्वं क्वचित्की रूपभिन्नता।**
**प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम्॥32॥**

## प्रकाशिका

**लोके**= लौकिकव्यवहारे यौ पदपदार्थो= शब्दाः शब्दानां प्रसिद्धाश्चार्था ये सन्ति, न तौ वेदेऽथवात्र तौ = वेदे ते शब्दा न सन्ति न वा तथैव तेषामर्था इति स्वीक्रियते उत लौकिकव्यवहारे ये शब्दाः वेदे अपि त एव शब्दास्तेषां लोक प्रसिद्धा एवार्थाः इति स्वीक्रियते इति सन्देहे रूपभेदात्पदंभिन्नम् =लौकिकशब्दानां वैदिकशब्दानां रूपेषु भेददर्शनात् यथा भद्रं कर्णेभिः इति प्रसिद्धे शान्तिसूक्ते कर्णेभिरितितृतीतीयाबहुवचनान्तरूपं श्रूयते, लोके तु कर्णशब्द "कर्णै" रिति तृतीया बहुवचनान्तरूपं पाणिनीयस्मृतिसिद्धं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसिद्धम्, एवमात्मशब्दोऽप्याकारसहितो लोके दृश्यते वेदे तु क्वचित् क्वचिद् आकाररहित एव श्रूयते, अतः लोकवेदयोः पदानां रूपभेदाल्लौकिकप-दाद्वैदिकं पदं भिन्नम्, उत्तानादिभिधा स्फुटा "उत्ताना वै देवगवा वहन्ती"-ति वेदे श्रूयते, लोके तु गावः अवाञ्चो वहन्तीति प्रत्यक्षम् अतः लोके वेदे च पदार्थेष्वपि भेदः अस्तीति लौकिपदेभ्यो वैदिकपदानि भिन्नानीति पूर्वपक्षः। सिद्धान्तस्तु वर्णैकत्वात् पदैकत्वम् = लोके वेदे च वर्णानामेकत्वात् पदानामप्यैक्यं युक्तम्, क्वाचित्की रूपभिन्नता = क्वचित् क्वचिदेव रूपभेदः, प्रायिकेण पदैक्येन प्रायः अग्निमीळे पुरोहितम्" अत्यादौ सर्वत्र लोके यथा रूपं वेदेऽपि तथैव श्रूयते अतः प्रायिकेण पदैक्येन लोकवेदयोः पदैक्यमेव युक्तम्, तथाविधं तदर्थैक्यम्=पदानामर्थानामपि प्रायिकेणैक्येन लोकवेदयोः पदार्थानां तद्वाचकपदानाञ्चैक्यमेवेति स्वीक्रियते।

अयमाशयः—पूर्वाधिकरणे सास्नादिमदर्थे गोशब्द एव साधुः न तु गाव्यादिशब्द इति व्यसाकरणस्मृतेः प्रामाण्यात् सिद्ध्यतीति निरूपितम्। सम्प्रति वाचकप्रसङ्गाद् वाच्यांशनिर्धारणायाकृत्यधिकरणं निरूप्यते। तदुपोद्घातकत्वेन प्रथमवर्णके लौकिकानां वैदिकानाञ्च शब्दानां तदर्थानाञ्चानन्यत्वं निरूप्यते। अतः इदं लोकवेदाधिकरणमिति प्रसिद्धम्। अत्रायं पूर्वपक्षः—यद्यपि शब्दनित्यत्वाधिकरणे वर्णनित्यत्वस्य साधितत्वात् वर्णात्मकशब्दस्य लोकवेदसाधारणत्वाल्लोकवेदयोः शब्दैकत्वं युक्तमेव तथापि एकार्थबोधत्वावच्छिन्नवर्णसमूहात्मकपदस्य लोके प्रयुज्यमानस्य वैदिकस्य च रूपभेदाद् धर्मभेदाच्चैक्यं न युज्यते। रूपभेदश्च स्वरच्छान्दसवर्णाग-मलोपविकारैः स्फुटः। यथा "अग्निमीळे" "देवमृत्विजम्" इति वेदे देवा अग्निरित्यादयशब्दाः अन्तोदात्तस्वरघटिता एव पठ्यन्ते प्रायः। लोके च शब्दानां स्वरेषु प्रायः अनादर एव। यद्यपि महर्षिपाणिनिना वेद इव भाषायामपि स्वरानुशासनस्य कृतत्वाल्लोकेऽपि स्वरनियमावश्यंभावः प्रतीयते तथापि शिष्टानां तत्र तथाऽऽदरादर्शनात् सत्यप्यनुशासने "वचन्ति" इत्यादिवदप्रयोगदर्शनात् स्वरनियमो लोके नावश्यक इति युक्तम्। लोके देवा ब्राह्मणा इति शब्दाः प्रसिद्धाः वेदे तु देवासः ब्राह्मणासः" इति छन्दसवर्णागमो दृश्यते। लोके "आत्मना इति प्रयोगः वेदे तु

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकारलोपघटित:" त्मना इति श्रूयते। एवं" उद्ग्राभं च निग्राभं चे" त्यादौ हकारस्य भकारात्मको विकार: वेदे श्रूयते, एवं लिङ्गभेदोऽपि क्वचित् यथा ते धर्मा "इति पुंसि धर्मशब्द: लोके प्रसिद्ध: वेदे तु तानि धर्माणि इति नपुंसके धर्मशब्द: प्रयुक्त:। तथा प्रत्ययभेदोऽपि क्वचित्। कर्णै: इति तृतीयाबहुवचने ''अतो भिस ऐस्'' इति सूत्रेण रूपं, वेदे तु भद्रं कर्णेभि:" इति श्रूयते। एवञ्च घटशरावयो: रूपभेदाद्भेदस्तथैव लोके वेदे च शब्दानां रूपभेदाद्भेद: स्फुटो भवति। एवं लौकिकवैदिकवाक्ययोर-ध्यायानध्यायादिधर्मभेदादपि शब्दानामैक्यं लोके वेदे च न युक्तम्। अत्र अधीयतेऽस्यामिति व्युत्पत्त्याध्ययनतिथिरध्याय: द्वितीयातृतीयादितिथय: अष्टम्माद्यनध्ययनतिथिरनध्याय:, वेदवाक्यानां कृतेऽध्याय एवाध्येय्यमनध्याये नैवेति नियम: न तु लौकिकवाक्यानां कृत इति वेदवाक्यलोकवाक्योर्भेदे ज्ञाते पदसमूहात्मकत्वाद्वाक्यस्य पदेष्वपि भेदो युक्त:। सिद्धान्तिनापि धर्मभेदेन पदभेद: स्वीक्रियते एव। तदुक्तं भट्टाचार्यै: पदावधारणोपायान् बहूनिच्छन्ति सूरय:। क्रमन्यूनातिरिक्तत्वस्वर- वाक्यस्मृतिश्रूती।" इति। जरा राजेत्यादिषु क्रमभेदाद्भेद:, ब्रह्मब्राह्मण इत्यादिषु न्यूनातिरेकवशाद्भेद:, श्व: अश्व इत्यादावपि न्यूनातिरेकवशाद्भेद:। स्वरात् पदभेदे इन्द्रशत्रुपदं प्रसिद्धम्, तथाहि त्वष्टा इन्द्रस्य हन्तारं पुत्रं लिप्सु: तदर्थं सोमयागमनुतिष्ठन् भागलिप्सुमपि इन्द्रं नाजुहाव। इन्द्र: स्वयमेवागत्य प्रसह्य सोमरसं पपौ। त्वष्टा सोमपात्रेऽवशिष्टं सोमरसमिन्द्रस्य शातयिता पुत्रो भूयादित्याशंसान:' स्वाहेन्द्रशत्रुर्वर्धस्वे ति मन्त्रेण जुहाव। तदा इन्द्रशत्रुरितिपदं तत्पुरुषस्वरं विहाय बहुव्रीहिस्वरेण प्रयुक्तम्। तेन स्वरापराधेन तत्रोत्पन्नस्य वृत्रासुरस्य शक्र एव शातयिताभूदिति तैत्तिरीयश्रुत्त्या बोधितमाख्यानम्। इन्द्रस्य शातयिता इन्द्रशत्रुरिति तत्पुरुषसमाश्रयणेऽन्तोदात्तस्वरप्रसक्ति:, इन्द्र: शातयिता यस्येति ब्रहुव्रींहिसमाश्रयणे पूर्वपदप्रकृतिस्वरप्रसक्ति: इति स्वरभेदात् पदभेद:। एतदेव पाणिनीयशिक्षानुवदति "मन्त्रो हीन: स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रु: स्वरतोऽपराधात्। इति। एवं स्थूलपृषतीमनड्वाहीमालभेत" इत्यत्र स्थूलपृषती" पदं स्थूला चासौ पृषती चेति कर्मधारयाश्रयणे अनुदात्तपदमेकवर्जम् (पा. सू. 6.1.152) इति सूत्रेण पूर्वेषां चतुर्ण्णामप्यचामनुदात्त: स्यात्। अत्र "समासस्य" इति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूत्रेण अन्तः उदात्तः स्यात् इति यज्ञश्रियम् इत्यादाविव अन्तोदात्तत्वे प्राप्ते "अनुदात्तपदमेकवर्ज" मित्युक्तसूत्रे तस्य बाधेन पूर्वेषां चतुर्णामचामन्तोदात्तो विधीयते। कर्मधारयसमासेनात्र पृषतीशब्दस्य मत्वर्थलक्षणया स्थूला पृषती च या गौः या यागसाधनमित्यर्थो लभ्यते। एवञ्च बिन्दुमत्यर्थकपृषतीशब्दात् स्थूलशब्दाच्च स्थूला बिन्दुमती च या गौः सा यागसाधनमिति स्थौल्यस्य बिन्दुमत्त्वस्य च गव्येवान्वयो भवति। बहुव्रीहिसमासाश्रयणे तु "बहुव्रीहौ प्रकृत्या पूर्वपदम्" पा. सू. 6/2/9 इति सूत्रेण पूर्वपदस्य प्रकृतिस्वरविधानात् स्थूलशब्दगतलकारोत्तराकारे उदात्तस्वरस्य प्रसक्तिः। अत्र च स्थूला पृषती यस्याः इति व्युत्पत्त्या स्थौल्यस्य पृषत्स्वेवान्वयात् स्थूलबिन्दुमती स्वतः स्थूला अस्थूला वा गौर्यागसाधनमित्यर्थो लभ्यते। अत्र स्वरभेदात्पदभेदः स्फुटः। वाक्यस्योदाहरणं यथा भोक्तुकामः पचते, पचते दक्षिणां देहि इत्यत्र पचते इति पदं नामत्वेनाख्याततत्वेन च सम्भाव्यमानं समभिव्याहाराद्भेदेन निश्चीयते। श्रुत्या पदभेदे उदाहरणन्तु यातः पुनरायाति" रामकृष्णौ यातः" इत्यत्र यात इति पदं नामत्वेनाख्याततत्वेन सम्भाव्यमानम् प्रथमवाक्ये आयातीत्याख्यातपदसामानाधिकरण्याद् यात इति प्रथमानां नामपदम्, द्वितीयवाक्ये तु द्विवचनान्तनामपदसामाधिकरण्याद् यात इति पदं प्रथमपुषद्विवचनस्याख्यातार्थस्यैव वाचकमिति निश्चीयते। यद्यप्यत्र उदाहरणद्वयेऽपि समभिव्याहारात्मकं वाक्यत्वन्त्वस्त्येव तथापि व्यधिकरणपदसन्निधिः वाक्यम् समानाधिकरणपदसन्निधिः श्रुतिरितिभेदमाश्रित्य वाक्यात्पृथक्त्वेन श्रुतिः पठिता। स्मृतेः पदभेदे उदाहरणन्तु अश्वस्त्वं देवदत्त इत्यत्र अश्वशब्दः सुबन्ताश्ववाचकः प्रसिद्धः, व्याकरणस्मृत्या "टुओश्वि गतिवृद्ध्योः" इति धातूत्पन्नं, श्वयतेर (पा. सू. 7/4/12) इति सूत्रेण "आगच्छ इत्यर्थे लङि मध्यमैकवचनत्वेनाख्यातमपि भवति, अतः व्याकरणस्मृत्या पदभेदः सिद्ध्यति। एवञ्च धर्मभेदात्पदभेदस्य सिद्धान्तेऽपि स्वीक्रियते इति लोके वेद च पदानां मध्ये धर्मभेदात् पदभेदो युक्तः। स्पष्टभेदकस्वरुयूपादिशब्दसाहचर्यादपि लोकवेदयोःपदभेदः। अत एव इमे लौकिका इमे वैदिका इति भेदेन व्यपदेशो युज्यते। संज्ञा चोत्पत्तिंसंयोगाद् इत्यधिकरणे अथैष ज्योति अथैष विश्वज्योतिः इत्यादौ संज्ञाभेदात्कर्मभेद यथा स्त्रीक्रियते तद्वदत्र पदभेदादेवार्थभेदोऽपि युक्तः। किञ्च "उत्ताना वै

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवगवा वहन्ति' इति श्रुतौ ये उत्ताना वहन्ति ते देवानां गोशब्दवाच्या इति गोशब्दवाच्यस्य लोकविलक्षणलक्षणदर्शनेन लौकिकार्थाद्वैदिकार्थानां भिन्नत्वं ज्ञायते। लोके हि गावः अवाञ्चो वहन्ति इति प्रत्यक्षम्, अतः लक्षणभेदाद् लौकिकगोशब्दवाच्यस्य वैदिकगोशब्दवाच्याद्भेदः स्फुटः। एवञ्च लोके वेदे च शब्दयोस्तदर्थयोश्च भेदः नैकत्वमिति पूर्वपक्षे प्राप्ते समाधिरभिधीयते शब्दनित्यत्वाधिकरणन्यायेन प्रत्यभिज्ञानादेव वर्णैकत्ववत्पदतदर्थयोरप्येकत्वं युक्तम्। पदमपि वर्णात्मकमेव, वर्णातिरिक्तपदस्फोटस्यानङ्गीकारात्। वर्णसमूहात्मकमेव वाक्यम् न तु तदतिरिक्तमखण्डस्फोटात्मकम्। अतः प्रत्यभिज्ञया सोऽयं गकार इत्येवमात्मिकया वर्णैकत्वे सिद्धे पदैकत्वं वारयितुं न शक्यते। पदैकत्वादेव संज्ञाधिकरणन्यायस्यानवतारादर्थैक्यमपि सिद्ध्यति। एवञ्च य एव लौकिकाः शब्दस्त एव वैदिकास्त एव तेषामर्था इति स्यात्। यदुक्तम् पदावधारणोपायान् इत्यादिना वर्णाभेदेऽपि स्वरादिभेदात् पदभेदः इति। तत्रोच्यते अर्थप्रतीत्युपयोगिस्वरादिभेद एव पदभेदप्रयोजक इति स्वीकार्यम् न तु स्वरादिभेदमात्रं पदभेदस्य प्रयोजकम् अन्यथा आद्युदात्तघटशब्दादन्तोदात्तघटशब्दस्य लौकिव्यवहारे भेदः प्रतीयेत। अत एव व्याकरणे स्वरविधौ छन्दोऽधिकारो न दृश्यते। अनेन भाषायामपि स्वरभेदादर्थभेदो भवतीति ज्ञायते अत एव च झल्युपोत्तमम् इति स्वरविशेषं प्रकृत्य विभाषा भाषायाम् इति लोके विकल्पविधानं सङ्गच्छते। महाभाष्ये पस्पशाह्निके श्वेतो धावति इति द्व्यर्थं वाक्यमित्युक्तम्। तत्र हि "श्वा'- इत्यान्तोदात्तम् ऊडिदम् इत्यादिना इतः इत्यपि तथा एकदेश उदात्तेनोदात्त" इति एकार उदान्तः। तथा च श्वा इत इत्यर्थे एकारोदात्तः। श्वेत इत्यस्य शुक्ल इत्यर्थेऽन्तोदात्तत्वे अकार उदात्तः "अनुदात्तं पदमेकवर्जम्" इत्येकारोऽनुदात्तः। तथाच भाषायामपि स्वरभेदात् पदभेद इति सिद्धे तत्र स्वरभेधमात्रं पदभेदप्रयोजकञ्चेत् स्वरभेदेन उच्चरितानां घटपदानामपि भेदः स्यात् अत, अर्थप्रतीत्यौपयिकस्वरभेदस्य पदभेदप्रयोजकत्वं वक्तव्यम्, तेन च योऽर्थप्रतीत्यौपयिको धर्मस्तद्भेदे भिद्यत एव पदमिति जरा राजादिषु क्रमादिभेदात्पदभेधो युक्त एव। यदि अनियतस्वराणामन्योऽर्थ इति स्मृतितो लोकतो वा सिद्ध्यति तदा नियतानियतस्वरतया लोकवेदयोः पदभेदः स्यात्, किन्तु तथा नास्त्यतः लोकवेदयोः पदैक्यमेव युक्तम्। यथा संवेष्टितः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पटः प्रसारितात् पटात् संवेष्टनधर्मभेदमात्रेण भिन्नो न भवति प्रत्यभिज्ञया पटैकत्वेन बाधात् तथा "सोऽयं गकारः" "तदेव पदम्" इति प्रत्यभिज्ञया वर्णैकत्वे पदैकत्वे च लोकवेदयोः पदानां सिद्धे तद्बाधेन धर्मभेदमात्राद् भेदो न युक्तः। अर्थप्रतीत्यौपयिकस्वरादिभेदात् पदभेदस्तु इन्द्रशत्रुरित्याद्युदाहरणेषु युक्त एव। त्मना देवास इत्यादावपि लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि उक्तार्थप्रतीत्यौपयिकधर्मभेदाभावान्न पदभेदः, अतः तेभ्योऽर्थभेदोऽपि नावगम्यते। अर्थभेदमात्रमपि पदभेदस्य प्रयोजकं नास्ति अक्षादिपदेषु नानार्थकेषु व्यभिचारात्। यथासूत्रस्यैकस्यैव चतुरङ्गुलषडङ्गुलभेदमात्रेण सूत्रभेदो न भवति तथा न्यूनातिरेककृतस्वरूपभेदे क्वचित्सत्यपि न तत्र पद भेदः। यद्युच्यते स्वरुयूपादिषु यथार्थनिर्णयः समभिव्याहाराद्भवतीति प्रथमप्रञ्चमे निर्णीतम् तथा लौकिकपदानां तदर्थानाञ्च वैदिकपदतदर्थेभ्यो भेदेऽपि अर्थनिणयः कर्तुं शक्यते अतः पदैक्य आग्रह किमर्थमिति तत्रोच्यते सर्वेषां वैदिकानां पदानां लौकिकपदेभ्यो भिन्नत्वे तेषां वैदिकानां पदानां तत्तदर्थेषु शक्तिग्रह एव न स्यात् प्रथमं शब्दानां शक्तिग्रहस्य व्यवहारादेव भवतीति स्वीकारात् वैदिकपदानां लौकिकपदेभ्यो भिन्नान्नां लोके व्यवहाराभावात् तेषां शक्तिग्रहो न स्यात् तेनार्थज्ञानार्थं स्वाध्यायविधायकं स्वाध्यायोऽध्येतव्य" इति विधिवाक्यं बाधितं स्यात्। लोकवेदयोः पदैक्ये सत्येव यूपादिपदानां साहचर्यादर्थनिर्णयः कर्तुं शक्यते इति पदैक्यपक्ष एव प्रथमपञ्चमे निर्णीतं समभिव्याहारादर्थनिर्णय इति सफलं भवति। न हि केषाञ्चिल्लौकिकभेदमात्रेण सर्वेषां तथात्वम्, प्रमाणाभावादुक्तबाधकसद्भावाच्च। यदुक्तम्-"उत्ताना वै देवगवा इति वेदे गोशब्दवाच्यस्य लक्षणसद्भावात् तेन लौकिकगोशब्दवाच्याद्विलक्षणत्वज्ञानात् लोके वेदे च पदतदर्थयोश्च भेद इति, अत्रोच्यते इदं वाक्यं उत्ताना वै देवगवा वहन्ति इति गोशब्दवाच्यत्वविधायकं नास्ति रोदनार्थवादवदन्यपरत्वात्। अतः दक्षिणात्वेन स्थितानां गवां देवसम्बन्धिनां स्तुत्यर्थमुत्तानवहनं कीर्त्यते, अत्र च वायुपुराणोक्ताख्यायिकापि सङ्गच्छते। त्रैलोक्यभ्रमणवशाद्देवा अपि कदाचिदिमं लोकमुपरि पश्यन्ति, अतः देवगवा उत्ताना वहन्ति, अतः अन्यपरत्वादस्य वाक्यस्य पदभेदज्ञापकत्वं नास्ति। एवञ्च लोके वेदे च पदतदर्थयोर्भेदे वैदिकपदानां शक्तिग्रहो न स्यादिति बाधसहकृतपदैक्यबोधिकया प्रत्यभिज्ञया वर्णैकत्ववत्पदैक्यं युक्तमिति सिद्धान्तः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं लोकवेदयोः पदैक्ये सिद्धे पदार्थविचारः आकृत्यधिकरणे सम्प्रति उपस्थाप्यते—

**जैमिनीयन्यायमाला**

**व्यक्तिर्व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात्।**
**व्यक्तिर्व्युत्पत्तिवलोयामाकृत्या सोपलक्ष्यते।।33।।**

**शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता।**
**क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्ष्यताम्।।34।।**

**प्रकाशिका**

व्रीह्यादिशब्दार्थः—व्रीहिभिर्यजेत" इत्यादौ व्रीह्यादिशब्दस्यार्थः, व्यक्तिः आकृतिर्वा =तत्तद्व्यक्तिविशेष उत सामान्यं व्रीहित्वादि सामान्यम् इति सन्देहे क्रियान्वयाद्व्यक्तिः = यागादिक्रियायाः व्रीह्यदिव्याक्तिविशेषेणैव सह सम्बन्धदर्शनात् व्यक्तिविशेष एव शब्दवाच्य इति पूर्वपक्षः। व्यक्तिविशेषस्यैव तत्तत्पदाभिधेयत्वे कथं व्यक्त्यन्तरे तत्पदप्रयोग इति शङ्कायां व्युत्पत्तिवेलायां=शब्दार्थग्रहणवेलायाम् आकृत्या सोपलक्ष्यते= जात्युपलक्षितव्यक्तावेव शक्तिग्रहो भवति अतो न दोष इति पूर्वपक्षे प्राप्ते आकृतेरर्थतोचिता=आकृतिः=जातिरेव शब्दार्थो युक्त इति सिद्धान्तः। तत्र हेतुः शक्तिग्रहादियुक्तिभ्यः इति व्यक्तीनामानन्त्यात् प्रत्येकं व्यक्तौ शक्तिग्रहस्यासम्भवात् जातावेव शक्तिर्गृह्यते। तर्हि यागादिक्रियायाः व्यक्तावन्वयः कथमुपपद्यत इति शङ्कायाम् क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्ष्याम् क्रियान्वयार्थं व्यक्तिरुपलक्षणीया व्यक्तौ शब्दाभिधेयत्वं न स्वीकार्यमिति सिद्धान्तः।

अयमाशयः—शब्दाश्चतुर्विधाः नाम, आख्यातः, उपसर्गः, निपातश्चेति। नामापि षड्विधम् जातिः, गुणः, क्रिया, यदृच्छा, द्रव्यम्, सर्वनाम इति भेदात्। अत्र आख्यातार्थः क इति द्वितीये विचारयिष्यते। निपातोपसर्गयोस्तु द्योतकत्वपक्षे यदर्थद्योतकत्वं तयोस्तस्यैवोदाहरणत्वमत्र युक्तम्। वाचकत्व-पक्षेऽपि स्वातन्त्र्येणार्थप्रतिपादकत्वाभावाद् अनु पश्चाद् इत्येवं निपातोपसर्गमात्र-प्रयोगे पदान्तरप्रयोगात्पूर्वमर्थसामान्यस्याप्यप्रतीतेः पदान्तरसम्बन्धे च "अनुभवति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पाश्चात्य" मित्यादौ अर्थविशेषस्यैव प्रतीतेः सन्देहाभावेनोदाहरणत्वं पृथक्त्वेन न युक्तमतः नामशब्दानां सुबन्तानामेव शक्तिः कुत्रेति विचारोऽत्र प्रवर्तते। तत्रापि नामशब्देषु गुणशब्दानां शुक्लादिपदानामपि शुक्लादिगुणस्य घटत्वादिजातिवन्नित्यैकत्वाभ्युपगमादवान्तरभेदाभावेन शुक्लत्वादिजात्यन्तरानङ्गीकारात् शुक्लगुणवाचित्वेन निर्णीतानां संशयाभावादेव विचारो न प्रसक्तः। गौः शुक्ल इत्यादौ विशेष्यनिघ्नानां गुणमात्रवाचकत्वमुत गुणोपलक्षितव्यक्तिवाचकत्वमति सन्देहसत्वात् विचारोऽत्र प्रसक्त एव। पाकादिक्रियाशब्दानामपि अवान्तरभेदाभावेनैवात्रानुदाहरणत्वम्। यदृच्छाशब्दानान्तु देवेदत्तादिसङ्केतितव्यक्तिमात्रवाचकत्वात् सन्देहाभावान्नात्रोदाहरणता। कृदन्तादिशब्दानाञ्च द्रव्यमात्रवाचकत्वस्यारुणाधिकरणे वक्ष्यमाणत्वादत्र उदाहरणत्वं न युक्तम्। एवं सर्वनामशब्दानामपि गुणाधिकरणे सन्निहितत्वोपलक्षिव्यक्तिमात्रवाचकत्वस्य वक्ष्यमाणत्वादत्र विचारो न युज्यते। तदेवं परिशेषात् जातिशब्दानामेवात्र विचार इति केचिन्मन्यन्ते। अन्ये तु उपसर्गनिपातरूपशब्दानां पृथग् विचारो नापेक्षते, यदृच्छाद्रव्यशब्दानामपि पृथग्विचारोऽत्र मास्तु किन्तु जातिगुणक्रियाख्यातशब्दानान्तु विचारोऽत्र प्रसक्त एवेति मन्यन्ते। तेषामयमाशयः—द्रव्यत्वव्याप्यगोत्वादिजातिस्वीकारवत् गुणत्वव्याप्यशुक्लत्वादिजातीनां कर्मत्वव्याप्यज्योतिष्टोमत्वादीनां स्वीकारे बाधकाभावात् तेषां विषयेऽपि जातिवाचकतोत व्याक्तिवाचकतेति सन्देहसत्वादत्र विचारो युक्त एव। एवमाख्यातशब्दानामपि प्रकृतिप्रत्यययोः धात्वर्थः भावनावाचकत्वस्य द्वितीये वक्ष्यमाणत्वेऽपि तद्गतजात्युपाध्यन्यतरधर्मवाचकत्वमुत तदुपलक्षितव्यक्तिमात्रवाचकत्वमिति सन्देहसत्वाद्युक्त एवात्र विचारः। तदेवमत्र जातिगुणक्रियाख्यातशब्दानामाकृतिर्वाच्या उत व्यक्तिर्वेति विचार्यते। अत्र पूर्वपक्षः-"व्रीहीन् वहन्ति" "पशुं संज्ञपयन्ति इति अवहननादिक्रिया विहिताः। आकृतेश्च अवहननाद्ययोग्यत्वात् व्रीह्यादिव्यक्तिविशेषाणां तद्योग्यत्वाच्च व्यक्तिरेव वाच्या नाकृतिः। इदञ्च कात्यायनादीनां मतम्। अत्र वार्त्तिके "गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः। जातिर्व्यक्तिश्च सम्बन्धः समूहो लिङ्गकारकैः" संख्या च सप्तमी तेषामष्टौ पक्षाः द्वयोर्द्वयोः।। नियोगेन विकल्पेन द्वे वा सह समुच्चिते। सम्बन्धः समुदायो वा विशिष्टा वैकयेतरे।। इति बहवः पक्षाः सम्भाविता उपन्यस्ताः परन्तु तेषां मध्ये

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राधान्येन पूर्वोक्तपक्षत्रयमत्र विचार्यते। व्यक्तिरेव शब्दवाच्येति वदतामयमाशयः अवहननादिक्रियाः अनित्यमूर्तद्रव्येष्वेव सम्भवन्ति न तु नित्याकृतौ। नित्यत्वादमूर्तत्वादाकृतिरवहननार्थं संज्ञपनार्थं वा योग्या न भवति।

"ब्राह्मणो न हन्तव्यः" इत्येवमादिप्रतिषेधाश्च प्राप्तौ सत्यामेव प्रमाणपदवीं गाहन्ते, अत्र ब्राह्मणशब्दस्य जातिवाचकत्वे जातर्नित्यत्वाद्धनन-स्याप्राप्तत्वादेव प्रतिषेधोऽर्थवान्न स्यात्। किञ्च जातेरेकत्वेन जातिरेव शब्दवाच्या चेत् "घटानानय इत्यादावेकत्वातिरिक्तसंख्यासम्बन्धोऽपि न स्यात्। एवं जातेरलिङ्गत्वेन लिङ्गान्वयोपि न स्यात् घटो निर्मितः राम आगच्छति रमा आगच्छति रामो दृष्टः रमा दृष्टा इत्यादौ लिङ्गन्वयो दृश्यते। यद्यपि लिङ्गान्वयोऽयं शब्दयोरेव न त्वर्थयोरन्यथा नदी दृष्टा इति न स्यात् स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः" इति लिङ्गलक्षणस्य नद्यादिव्यक्तिष्वदृष्टत्वात्, सत्त्वरजस्तमोगुणानामाविर्भावादिलक्षणलिङ्गस्य च व्यक्ताविव जातावपि सम्भवात् जातेरलिङ्गत्वेन लिङ्गान्वयो न स्यादिति कथनं समीचीनम् तर्थापि अमूर्तत्वाज्जातेः यथाक्रियान्वयो न भवति तथा लिङ्गान्वयो न भवति अतः जातिः शब्दवाच्येति न युक्तमिति कथन एव तात्पर्यम्। तदुक्तं शास्त्रदीपिकायाम् एवञ्च वृक्षौ वृक्षाभ्यामिति प्रातिपदिकार्थे प्रत्ययाभिहितानि लिङ्गसङ्ख्याकारकाणि तथा सम्बन्ध्यन्ते। जातेरलिङ्गत्वाद-सङ्ख्यत्वादमूर्तत्वेनाकारकत्वाच्चासम्बन्धः स्याद् इति। ननु लाक्षणिक-व्यक्त्याश्रयेण जातेः शब्दवाच्यत्वेपीदं सर्वमुपपद्यत इति चेत् न तथा सति वैदिकशब्दानां लाक्षणिकत्वापत्त्या क्वापि लक्षणा दूषणं न देयं स्यात्। एवं गौः शुक्ल इति सामानाधिकरण्यमपि व्यक्तावैव भवितुमर्हन्ति न तु जात्या। न च यत्र सम्भवति जातेः शब्दार्थत्वं "अयं घट" इत्यादौ जातिर्वाच्या भवतु यत्र गा आनय इत्यादौ आकृतेः शब्दार्यत्वे बाधो दृश्यते तत्र व्यक्तिर्वाच्येति व्यवस्था भवतु इति वाच्यम् अनेकशक्तिकल्पनागौरवं प्रसज्येत, अष्टदोषदुष्टविकल्पापत्तेश्च। गोशब्देन सास्नादिमानभिधीयते इत्याप्तवाक्यात् शक्तिग्रहदशायां सास्नादिमद्व्यक्तावगतायाः शक्तेः कदाचिद् व्यक्तिपरिहारेण जातिवाचित्वे बाधप्रसङ्गाच्च। न च केवलव्यक्तेः शब्दार्थत्वेऽपि यस्यां व्यक्तौ शक्तिग्रहो यस्य शब्दस्य जातस्ततोऽन्यत्र तत्प्रयोगो न स्याद्,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दृश्यते तु लोके बालो मात्राङ्गुलिनिर्देशेनेयं गौरिति गोव्यक्तिविशेषस्यैव गोशब्दार्थत्वेनोपदिष्ट तद्भिन्नगोव्यक्तिष्वपि गोशब्दं प्रयुङ्क्त इति अतो व्यभिचारः गोव्यक्तीनां बहुत्वाच्च सर्वासु व्यक्तिषु शक्तिग्रहस्यासम्भवाच्च बाधप्रसङ्गो दुर्वार इति वाच्यम्। शक्तिग्रहकाले जातेरुपलक्षणत्वात् गोत्वादिजात्या सर्वव्यक्तीः क्रोडीकृत्य शक्तिग्रहाद्गोव्यक्त्यन्तरेऽपि गवादिशब्दप्रयोगो युज्यते एव। अयं विशेषः–शक्तिग्रहे जातेरुपलक्षणं न तु विशेषणमिति तस्याः प्रतीतेः सत्त्वेऽपि शब्दार्थत्वं नास्ति यथा योऽयं शुक्लवासाः स देवदत्तः" इत्यत्रोपलक्षणभूतं वासोऽनभिधायैव देवदत्तोऽभिधीयते तथा जातेरुपलक्षणत्वात् जातिर्नाभिधीयते, व्यक्तय एवाभिधीयन्त इति व्यक्तिरेव शब्दार्थो न तु जातिरित्युच्यते, व्यक्तिवाचित्वे शब्दस्यात एवानेकार्थत्वदोषो न सम्भवति गोव्यक्तन्तरे गोशब्दप्रयोगो युज्यत इति व्यभिचारोऽपि नास्ति, बहुषु शक्ति-ग्रहस्यासम्भवाद् बाधप्रसङ्गोऽपि नास्ति। कदाचिद् व्यक्तिर्वाच्या कदाचिज्जाति-र्वाच्येत्युक्तमते तु अनेकशक्तिकल्पनागौरवमष्टदोषदुष्टविकल्पापत्तिः, ऐककर्म्यान्नियमः स्यात् इति तार्त्तीयीकन्यायात्प्रथममवगतस्य सम्बन्धस्य नियमरूपस्य कदाचिद्व्यक्तिपरिहारेणाकृतिवाचित्वे बाधप्रसङ्गश्च व्यक्तिवाचकत्वपक्षस्वीकारे तु नास्ति उक्तदोषत्रयम्, क्रियान्वययोगत्वस्य च व्यक्तावेव स्पष्टं प्रत्यक्षमिति व्यक्तिं विहाय जातेः शब्दार्थत्वं नोचितम्। किञ्च जातेर्व्यभिचारेण व्यक्तिविशेषनिश्चायकत्वासम्भवेन व्यक्तिश्चाव्यभि-चारेण जातिविशेषनिश्चायकत्वादपि व्यक्त्या जातिलक्षणैवोचिता जातिशक्तिवादिनां मते घटपदशक्यं घटत्त्वम् शक्यतावच्छेदकं घटत्वमिति वक्तव्यम् तच्च घटेतरावृत्तित्वे सति निखिलघटवृत्तित्वरूपमिति अनन्तघटव्यक्तीनां तदितरानन्तव्यक्तीनाञ्च तत्र प्रवेशेन गौरवम् व्यक्तिशक्तिवादिनान्तु घटव्यक्तय एव शक्याः घटत्वं जातिरूपमेव शक्यतावच्छेदकमिति तत्रानन्तघटव्यक्तीनां तदितरव्यक्तीनाञ्चाप्रवेशेन लाघवमतः व्यक्तावेव शक्तिरुचिता। किञ्च षड् गावो देयाः, द्वादश देयाः" इत्येवं श्रूयते तत्र घटादिशब्दानां गोशब्देन एकार्थवृत्तित्वरूपं सामानाधिकरण्यं गम्यते, एतच्च जातेः शब्दार्थत्वे न युज्यते षडादिशब्दानां जातेश्च भिन्नार्थवृत्तित्वात्। एवचं यदि पशुरुपाकृतः पलायेतान्यं तद्वर्णं तद्वयसमालभेत इति अन्यशब्दघटितं वाक्यमुपलभ्यते, तत्र जातिवाचकत्वे

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शब्दस्य अन्यस्मिन्नालभ्यमानेऽपि सैव जातिरित्यन्यशब्दो नोपपद्यते, व्यक्तिवाचित्वे तु स्पष्टमेवोपलभ्यते। नैयायिकास्तु न केवलं जाति, शब्दार्थः न वा केवलं व्यक्तिशब्दार्थ अपि तु जातिविशिष्टव्यक्तिरेव शब्दार्थ:। जात्या व्यक्तीनामनुगमादर्थैकत्वमत: विशेषणभूतया जात्या क्रोडीकृतेषु सर्वेषु व्यक्तिभेदेषु शक्तिग्रह उपपद्यते। षड् गावो देया, द्वादश देया इत्यादौ विशेषणाभेदे सत्यपि विशेष्यभेदात् सङ्ख्याया: सामानाधिकरण्यमुपपद्यते। यदि पशुरुपाकृत: पलायेतान्यं तद्वर्णं तद्वयसमालभेत" इत्यत्रान्य-शब्दोऽप्यस्मिन्पक्षे विशेष्यभेदादुपपद्यते। अत: व्यक्ति: शब्दवाच्या, जातिविशिष्टव्यक्तिर्वा शब्दवाच्या नाकृतिरेवेति पूर्वपक्ष:।

सिद्धान्तस्तु आकृतिरपरपर्याया जातिरेव शब्दवाच्या लाघवादिति प्रतिपाद्यते। कथं लाघवमिति चेदुच्यते। व्यक्तिवाचकत्वे शब्दानां विवेचनीयमिदम् किं सकलव्यक्तिवाचित्वमुत एकव्यक्तिवाचित्वं वेति। आद्ये व्यक्तीनामानन्त्येन अननशक्तिकल्पनापत्ते:। न च जातेरुपलक्षण-त्वाङ्गीकारादुपलक्षणैक्येन शक्त्यैकत्वसम्भवान्नानेकशक्तिकल्पनेति वाच्यम् घटत्वादिजातेरुपलक्षणभूताया: शक्यतावच्छेदकत्वासम्भवात् तत्तद्व्यक्तित्वस्यैव शक्यतावच्छेदकत्वकल्पनादनन्तशक्तिकल्पनापत्ति:। यदि चोपलक्षणीभूताया जाते: शक्यतावच्छेदकत्वमपि कल्प्यते चेदपि शक्यनानात्वादेवानेक-शक्तिकल्पना दुर्वारा न हि नानात्वव्यक्तिष्वेका शक्ति: सम्भवति। यदि तु घटत्वादिजातिवदे एकैव शक्ति: पर्याप्तिसम्बन्धेन सर्वव्यक्तिषु कल्प्येत तदा तदवच्छेदकस्य घटत्वस्यापि अभिधानविषयकत्वकल्पनाया अवश्य-म्भावित्वात् उभयो: शब्दार्थत्वकल्पनापेक्षया जातेरेव शब्दार्थत्वमुचितमिति जातिशक्तिवाद एव स्वीकृत: स्यात्। न हि अनभिहितं शक्यतवच्छेदकं भवितुमर्हति। अत: व्यक्तिशक्तिवादे गौरवाज्जातावेव शक्तिस्वीकारो युक्त:। किञ्च व्यक्तिवाचकत्वे शब्दानां व्यभिचारोऽपि भवति तथाहि घटमानय घटं नय इत्येवमावापोद्वापाभ्यां शुक्लघटे घटपदस्य शक्तिग्रह: यस्य जात: स एव रक्तघटेऽपि घटपदप्रयोगं करोतीति अनुभवसिद्धम्, शुक्लघटव्यक्तौ व्युत्पन्नो घटशब्द: रक्तघटव्यक्तौ प्रयुज्यमान: स्वार्थं व्यभिचरेत्। जातिविशिष्टव्यक्तौ शब्दस्य शक्तिरिति स्वीकारे उभयत्र शक्तिकल्पनागौरवं स्यादत: लाघवाज्जातावेव शक्तिस्वीकारो युक्त:। किञ्च गामानय इति

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रवणसमनन्तरं का गौरानेया इति जिज्ञासा सर्वानुभवसिद्धा, व्यक्तिवाचकत्वे तन्न सङ्गच्छते, व्यक्तिविशेष एव शक्तिग्रहस्य सत्वात् तद्व्यक्तिविशेषस्यैव बोधात्पुनः का गौरिति जिज्ञासायाः अनुदयात्। जातिवाचकत्वेन तु लक्षणया गोत्वावच्छिन्नसकलगोव्यक्तीनामुपस्थितौ का गौरानेयेति जिज्ञासायाः उदय सम्भवाज्जिज्ञासा युज्यत एव। किञ्च "श्येनचितं चिन्वीत इति श्रूयते, अत्र कर्मण्यग्न्याख्याम्"[1] .इति सूत्रेण कर्मवाचके श्येनपदरूप उपपदे सति अग्न्याख्यस्थण्डिलसंज्ञायां कर्तव्यायां चिनोतेः क्विप् विधानात् श्येनस्य कर्मत्वेनैवान्वय इति ज्ञायते। अतः श्येन इव चितः श्येनचित् तं चिन्वीत अर्थात् श्येनसदृशमग्न्याख्यस्थपिण्डलविशेषं चयनेन निष्पादयेदित्यर्थो लभ्यते। चितं चिन्वीत इत्यत्र पुनरुक्तिस्तु ज्योतिष्टोमेन यज्ञेन यजेत टित्करणं करोति" इत्यादिवत् समान्यविशेषभावेनेति न दोषः। तत्र श्येनसादृश्यञ्च नैकया व्यक्त्या भवितुमर्हति अनिर्धारितरूपव्यक्त्यन्तरविलक्षणै-कव्यक्क्तिसादृश्यस्येष्टकाभिः सम्पादनस्याशक्यत्वात्, तद्व्यक्तिविशेषस्य नाशे शब्दार्थविलोपप्रसङ्गाच्च। नापि सर्वाभिः व्यक्तिभिः सादृश्यं वक्तुं शक्यते अतीतानागतानां वर्तमानानाञ्च व्यवहिताव्यवहितानाञ्च सकृदुच्चरितेन श्येनशब्देन युगपद्बुद्ध्यनारोहात् सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वनियमात् एकस्य पदस्यानेकार्थत्वापाताच्च। अतः गत्यन्तराभावात् श्येनशब्दः श्येनाकृतिवाचक इति स्वीकार्यम्। आकृतिर्व्यङ्ग्या जातिरिति अत्राकृतिर्जातिरे-वेति शब्दानां जातिवाचकत्वमेव सति सम्भवे युक्तम्। यदुक्तं व्यक्तिवाचक-त्ववादिभिः जातिवाचकत्वे शब्दानां लिङ्गसङ्ख्याकारकसम्बन्धो न स्यादिति अत्रोच्यते वस्त्वनेकान्तवादस्य स्वीकारान्न दोषः। वस्त्वनेकान्तवादो नाम सामान्यं नाम व्यक्तेरर्थान्तरभूतं किमपि तत्वं नास्त्यपि तु वस्त्वेवोभयात्मकं व्यावृत्त्यनुगतरूपतया बुद्ध्या गृह्यत इति वादः। अतः सामान्यात्मना वस्तु शब्दाद्गम्यते व्यक्त्यात्मना च व्यवहाराङ्गतामेतीति शब्दानां जातिवाचकत्वेऽपि लिङ्गसङ्ख्याकारकसम्बन्धः शब्दानां सङ्गच्छत एव। तदुक्तम् पार्थसारभिमिश्रै आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषः। सन्देहाच्चरमज्ञानाच्चित्रबुद्धेरभावात्। अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः।। आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता। व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता।। लिङ्गसङ्ख्यादिसम्बन्धः

1. पा. सू. 3.2.12

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सामानाधिकरण्यधीः। सर्वं समञ्जसं ह्येतद्वस्त्वनेकान्तवादिनः। इति नीलो घटः शुक्लो घटः इति सकलघटव्यक्तिषु घटाकारोऽनुवर्तमानो दृश्यते, नीलशुक्लाकारौ तु व्यावर्तेते, तद्यदि तयोःनीलघटव्यक्तिघटत्वयोरभेदः घटाकारानुवृत्तौ नीलघटाकारोऽप्यनुवर्तेत तद्व्यावृत्तावर्थान्नीलघटाकारस्य व्यावृत्तौ घटाकारोऽपि व्यावर्तेत। एवं यदि नीलघटव्यक्तिघटत्वयोर्भेदः तदा नीलघटव्यक्तौ घट इति प्रतीतिः जात्यात्मना नोदीयात्। न हि घटाद्भिन्ने नीलपटे घट इति घटात्मना प्रतीतिरबाधिता स्वीक्रियते। एवञ्च घटव्यक्तिघटत्वयोः घटपटयोरिव भेदो नास्ति, न वा घटातिरिक्तं घटत्वं नास्तीनि घट एव घटत्वमिति पूर्णतोऽभेदोऽप्यस्तीति अगत्या भेदाभेदो स्वीकार्यौ। तथा च वस्वनेकान्तवादाश्रयणेन शब्दानां जातिवाचकत्वेऽपि लिङ्गसङ्ख्यादि-सम्बन्धो व्यक्त्या सह न विरुध्यत इति न दोषः। नेचैवं व्यक्त्यभेदे जातेः व्यक्तिवज्जातेरप्यनित्यतापत्तिरिति वाच्यम् व्यक्त्यात्मना जातेरनित्यत्वन्तु स्वीक्रियत एव जातिस्तु स्वरूपत नित्यैवेति न दोषः। नचैवं व्यक्तीनां शब्दवाच्यत्वे कात्यायनादिस्वीकृतस्य व्यक्तिरेव वाच्येति पक्ष एव समाश्रितः स्यात् स च व्याकरणस्य प्रामाण्योपपादकेन पूर्वाधिकरणेनैव गत इति अधिकरणान्तरारम्भो व्यर्थः स्यादिति वाच्यम्, व्यक्तेर्वाच्यत्वेऽपि व्यक्त्यात्मना वाच्यत्वं नोच्यते अपि तु जात्यात्मनैव वाच्यत्वमुच्यते, एतच्च वैयाकरणैर्न स्वीकृतमिति अपवादसङ्गत्येदमधिकरणमारब्धमिति नेदमधिकरणं व्यर्थम्। अयमनेकान्तवादः तदर्थत्वात्प्रयोगस्याविभागाद् इत्यत्र अविभागशब्देन जातिव्यक्त्योर्विभागो नास्ति जातेर्व्यक्तितादात्म्यात् इति सूत्रे उक्तः। अग्रे च षष्ठतृतीयतृतीये "अपि वाऽव्यतिरेकाद् रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयञ्च सत्ववदि"ति प्रतिपादयिष्यते। एवञ्च शब्दानामाकृतिवाचकत्वं युक्तमिति सिद्धम्।

सम्प्रतिगुरुमतेनेदमधिकरणं निरूप्यते–

**जैमिनीयन्यायमालां**

**गवादिचोदना नो मा जातिव्यक्त्योरनिर्णयात्।**
**आनन्त्यव्यभिचाराभ्यां न व्यक्तिरिति निर्णयः॥35॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## प्रकाशिका

गवा सोमं क्रीणाति इत्यत्र गोशब्दस्य जातिव्यक्त्योरनिर्णयात्= जातिवाचकत्वं व्यक्तिवाचकत्वं वेति निर्णयासम्भवात् गोशब्दघटितं चोदनावाक्यं न प्रमाणमिति पूर्वपक्षे प्राप्ते आनन्त्यव्यभिचाराभ्यां व्यक्तिवाचकत्वं गवादिशब्दानां नास्त्यपि तु जातिवाचकत्वमेवेति निर्णयसम्भवाद् गवादिशब्दघटितं चोदनावाक्यं प्रमाणमेवेति सिद्धान्तः।

अयमाशयः—पूर्वाधिकरणेऽस्मिन्नर्थे इदं पदं साध्विति पाणिनिप्रभृतेः स्मरणान्निश्चीयत इति व्याकरणप्रामाण्याधिकरणे निर्णीतमाश्रित्य लोके साधुत्वेन निर्णीतेऽपि शब्दे वेदेऽन्यथारूपस्य श्रवणात् कथं वेदे शब्दार्थनिर्णय इति शङ्काया वारणार्थं लोकवेदाधिकरणं प्रवृत्तम्, लोकवेदाधिकरणे हि य एव लौकिकाः शब्दास्त एव वैदिकास्त एव तेषामर्था इति शब्दार्थोभयविषयिका चिन्ता कृता, इदानीं गवादिशब्देषु विशिष्य चिन्ता क्रियत इति सङ्गतिः। यद्यपि तद्भूताधिकरणे सर्वेषां शब्दानां कार्यपरत्वं निर्णीतम् तथापि गवादिशब्दानां व्यक्तिद्वारकमुत आकृतिद्वारकं कार्यपरत्वमिति सन्देहनिर्णयार्थमिदमधिकरणं प्रवृत्तम्। व्यक्तितः कार्यान्वय आकृतेः, आकृतितश्च धीविषयता व्यक्तेरित्युभयोरेकैकत्र सापेक्षत्वात् शब्दानामाकृतिद्वारैव कार्यपरत्वं व्यक्तिद्वारैव कार्यपरत्वं वेति निर्णयासम्भवात् सन्दिग्धं चोदनावाक्यमप्रमाणमिति पूर्वपक्षे व्यक्तीनामानन्त्यात् व्यक्तिवाचकत्वे शब्दशक्तिग्रहः दुर्लभः स्यात् एकस्यां व्यक्तौ शुक्लघटे व्युत्पन्नो घटशब्दः कृष्णघटे प्रयुज्यमानः स्वार्थं शुक्लघटरूपं व्यभिचरेदतः आकृतावेव शक्तिरिति भाट्टमतवदेव स्वीक्रियते, परन्तु व्रीहीनवहन्तीत्यादौ अवहननादिक्रियाया व्रीहिव्यक्तौ कथमन्वय इति प्रश्ने आकृतौ शब्दस्य मुख्या इति व्यक्तौ लक्षणेति, जातिर्नाम व्यक्तेरर्थान्तरभूतं तत्त्वं किमपि नास्त्यपि तु वस्त्वेवं द्व्यात्मकं व्यावृत्त्यनुगतरूपतया बुद्ध्या गृह्यते तत्र सामान्यात्मना वस्तु शब्दाद् गम्यते विशेषात्मना च क्रियासम्बन्धश्चोद्यत इत्येवं वा समाधानं नेष्यते। व्यक्तौ शब्दस्य वृत्तिरेव नास्ति, जातिस्तु व्यक्तेः सर्वथा भिन्ना, वस्त्वनेकान्तवादो न युक्तः इति स्वीक्रियते। गामानयेत्यादौ गवादिशब्दानां गोत्वादिसामान्यवाचकत्वे कथं क्रियान्वयित्वेन व्यक्तेर्भानमिति शङ्कैवं समाधीयते सामान्यं जातिरित्यपरपर्याया

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकृतिः व्यक्तिपरतन्त्रस्वभावैव प्रत्यक्षसिद्धा, न पुनः व्यक्त्यन्तरवत् स्वतन्त्रा। परतन्त्रा चान्यस्मिन् प्रकाशमान एव प्रकाशते यथा अर्थप्रकाश एव ज्ञानप्रकाशः। मवादिशब्दैराकृतेर्बोधो भवतीति सर्वैः स्वीक्रियते, अतः परतन्त्रा चाकृतिः परभूते व्यक्त्यन्तर्भावघटितमूर्तिरित्याकृतिप्रतीतौ व्यक्त्यन्तर्भावो भवतीति तेनैव क्रियान्वयित्वेन व्यक्तेर्भानं सङ्गच्छते अतः व्यक्तौ शब्दस्य वृत्तिर्नापेक्षते, न वा वस्त्वैकं द्व्यात्मकमिति कल्पनापि नापेक्षिता। विनापि शब्देन य आकृतिं जानाति स व्यक्तिमपि जानात्येव, शब्देनापि य आकृतिं न जानाति स व्यक्तिमपि न जानाति अतः शब्दस्य स्वाभाविकी शक्तिराकृतावेवेति निश्चीयते। कार्यान्वयि शब्दाभिधेयम् कार्यान्वयिनी च व्यक्तिरतः व्यक्तौ कार्यान्वयो युज्यत एवेति न तदर्थः वस्तुनो द्व्यात्मकत्वकल्पना नेचिता। अतः गवादिनोदनानां प्रामाण्यं युक्तमिति प्राभाकरमतम्। गवादिद्रव्यवाचकशब्दनां गोत्वादिसामान्यवाचकत्वनिश्चयस्य प्रयोजनन्तु सप्तमद्वितीये कवतीषु रथन्तरं गायती त्यत्र रथन्तरशब्दः अभि त्वा शूर नोनुम इत्यस्य गीतिविशिष्टस्य ऋग्विशेषस्य वाचक उत गीतिमात्रस्येति सन्दहे गीतिविशिष्टायामृचि प्रयोगदर्शनादृग्विशेषवचनत्वमिति पूर्वपक्षे एतदधि-करणन्यायेन विशिष्टवचनत्वे विशेषणभूतगीत्यभिधानस्यावश्यकत्वात्तदभिधाने च तत एव तदविनाभूतायामृचि प्रतिपत्तिसिद्धेरभिधानशक्तिकल्पनानुपपत्तेः गीतिमात्रमेवाभिधेयमिति निर्णीयते।

एवञ्च त्रिभिः पादैः विधिरर्थवादो मन्त्रः स्मृतिः शिष्टाचार इति पञ्चप्रमाणानि धर्मे निरूपितानि। इतः परं प्राधान्येन नामधेयानां विचारः चतुर्थे पादे प्रवर्त्तिष्यते।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चतुर्थः पादः

# प्रथमाधिकरणम्

## प्रकाशिका

त्रिभिः पादैश्चाम्नायस्यैदमर्थ्यमुक्तम्। तत्र प्रथमपादे विधीनां वेदैकगम्ये धर्मे प्रवर्तकत्वेन द्वितीये पादेऽर्थवादानां विध्यपेक्षितप्राशस्त्यादिबोधनेन मन्त्राणाञ्च प्रयोगाकालिकार्थस्मारकत्वेन तृतीये च पादे स्मृतिशिष्टाचारयोः वेदमूलतया प्रामाण्यमित्युपपादितम्। इदानीं चतुर्थपादे नाम्नां विचारः प्रवर्तते। अत्र सामान्यतः नामधेयानां धर्मे प्रामाण्ये सिद्धे कुत्र किन्निमिनं नामधेयत्वं स्वीक्रियते इति विचारस्य युक्तत्वाद्वार्त्तिककारैरिदमधिकरणं द्विधा व्याख्यातम्। तत्र प्रथमे वर्णके नामधेयानां कथं प्रामाण्यमित्युच्यते। यद्यपि नामधेयत्वेन सम्मतानामुद्भिदादिपदानां साक्षाद्वेदगतत्वेन वेदवाक्यानां प्रामाण्यप्रकारविवेचन-क्रमे प्रथमे पादे विधीनां प्रामाण्यं द्वितीये मन्त्रार्थवादयोः प्रामाण्यमिति निरूपणानन्तरं तृतीय एवं पादे नामधेयानामपि प्रामाण्यप्रकारविवेचनं प्राप्तम् तथापि प्रथमद्वितीयपादाभ्यां विधिमन्त्रार्थवादानां प्रामाण्ये निरूपिते त्रिविध-वेदोपजीव्यस्मृत्यादिप्रमाणान्तराणां नामधेयोपजीव्यत्वाभावान्नामधेयप्रामाण्य-विचारात्पूर्वमेव विचारस्योचितत्वात् स्मृतिशिष्टाचारयो प्रामाण्ये चिन्तिते आद्यसूत्रे "अथातो धर्मजिज्ञासे"–ति प्रमाणस्वरूपसाधनफलैः विचार्यत्वेन प्रतिज्ञातस्य धर्मस्य समेषां प्रमाणानामपि विचार्यत्वोक्तेः प्रकृते चतुर्थे पादे नामधेयानां केन केन निमित्तेन क्व क्व प्रामाण्यमिति विविच्यते। तत्रादावुपोद्घातसङ्गत्या प्रथमं वर्णकं प्रवर्तते। श्रीमाधवाचार्यैरपि वार्तिकाकार-मतेनादौ प्रथमाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**उद्भिदादिपदं धर्मे किममानुमत प्रमा।**
**विध्यर्थवादमन्त्रांशेष्वनन्तर्भावतो न मा॥1॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अन्तर्भावो विधावुद्भिदा येजेतेति दृश्यते।**
**नामत्वेनान्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत्॥2॥**

## प्रकाशिका

उद्भिदादिपदम्–"उद्भिदा यजेत", "बलभिदा यजेत" इत्यादिवाक्येषु "उद्भिदा" "बलभिदा" इत्यादिपदं दध्यादिवल्लोके द्रव्यविशेषे क्वचिदप्यप्रसिद्धम्, धर्मे **किममानम्**=किम् अप्रमाणम् उत प्रमा=प्रमाणमिति सन्देहे विध्यर्थवादमन्त्रांशेषु=विधिभागेऽर्थवादभागे मन्त्रभागे वा अनन्तर्भावतः=अन्तर्भावाभावादेतादृशपदजातं **न मा** = धर्मे न प्रमाणम् इति पूर्वपक्षे प्राप्ते "उद्भिदा यजेत" इति विधौ उद्भिदेति पदस्य अन्तर्भागो दृश्यते, वाक्ये "उद्भिदा यजेत" इति वाक्ये उद्भिदेति पदस्य नामत्वेन अन्वयो वक्ष्यतेऽन्तिमाधिकरणे इति शेषः। अतः प्रमैव तद् उद्भिदादिपदम्।

अयमाशयः–"उद्भिदा यजेत" बालभिदा यजेत" इत्यादिवाक्यानां वाक्यगतानामुद्भिदादिपदानां वा प्रामाण्यं "स्वाध्यायोऽध्येतव्य" इति विधिपरिगृहीतत्वेन चोदनासूत्रेणैव सिद्धम्। अस्मिन्नधिकरणे नामधेयानामपि प्रयोजनवदर्थबोधकत्वेन प्रामाण्यमुच्यते इति प्रतिपाद्यते। अतः धर्मप्रमाणनिरूपणपरेणानेण्नाध्यायेन सङ्गतिः सुलभैव। पूर्वत्र पादेषु वाक्यानां विध्यर्थवादमन्त्रात्मकानां प्रामाण्यप्रकारश्चिन्तितः, अतः पादे नामधेयादिपदप्रामाण्यनिरूपणस्य पादार्थत्वात् पादेनानेनास्याधिकरणस्य सङ्गतिरपि सुलभैव। अत एव पदार्थविचारपरेण पूर्वाधिकरणेनापि सङ्गतिरवगम्यते।

पूर्वपक्षस्तु विधायकत्वेन "यजेते"–त्यादिविधीनां प्रामाण्यमस्तु, अर्थवादानान्तु विध्यपेक्षितप्राशस्त्यादिबोधकत्वेन मन्त्राणाञ्च प्रयोगकालिकार्थ-स्मारकत्वेन प्रामाण्यमस्तु नाम्नान्तु नामधेयत्वेन प्रामाण्यं मास्तु किन्तु नामत्वेनाभिमतानां तत्तत्पदानां गुणविधित्वेनैव प्रामाण्यमस्तु नामत्वे प्रामाण्यप्रकारत्वस्यादर्शनादिति भवति। तथाहि–"यजेत्" जुहुयाद्" "दद्यात्" इत्येवं विधयः श्रूयन्ते। तैश्च विधिभिः यागहोमदानेषु प्रवर्तन्ते पुरुषाः। अत पुरुषप्रवर्तकत्वाद् विध्यर्थः प्रवर्तना शाब्दभावनेति व्यपदिश्यते। प्रवर्तना च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रवृत्तिहेतुभूतो व्यापारः। प्रवृत्तिश्चौदासीन्यावस्थातः प्रच्युतीकरणम्। व्यापारश्चांशत्रयमपेक्षते–साध्यम् साधनमितिकर्तव्यताचेति। तत्र साध्याकाङ्क्षायां स्वर्गादिकं साध्यत्वेन सम्बध्यते। साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेन सम्बध्येते। इतिकर्तव्यताकाङ्क्षायामर्थवादवाक्यैः समर्पितं प्राशस्त्यज्ञानमिति-कर्तव्यतात्वेन सम्बध्यते। अतः अर्थवादभागानां विध्यर्थरूपाया भावनाया इतिकर्तव्यतारूपेण सम्बन्धोऽवगम्यते। मन्त्राणाञ्च यद्यपि प्रवर्तकत्वेन स्तावकत्वेन वा प्रामाण्यं नास्त्यपि तु विध्यपेक्षितार्थस्मारकत्वेन प्रयोजनवत्वं विद्धयति। उद्भिदादीना मन्त्रत्वमपि न सिद्धयति, यतः "तच्चोदकेषु मन्त्राख्या" इत्यग्रे येषां वेदावयवानां मन्त्रतेन याज्ञिकानां प्रसिद्धिस्तेषामेव मन्त्रत्वमिति निरूपयिष्यते। उद्भिदादीनां तु मन्त्रत्वप्रसिद्धिर्नास्ति। उत्तमामन्त्रणा स्यन्तत्वान्तरूपादीनां मन्त्रलिङानामप्यभावात् मन्त्रे उद्भिददीनामन्तर्भावो न भवति। "अग्नये जुष्टं निर्वयानि इत्यत्रोत्तमपुरुषः,"अग्ने यशस्विन् यशसे समर्पयेत्यामन्त्रणम्, "उर्वी चासि वस्वी चासि" इत्यत्र स्यन्तरूपम्। "इवे त्वोर्जेत्वे"-ति त्वान्तरूपम्। "अग्निमीठे पुरोहितम्" इत्यत्र स्तुतिरूपम्। "नवो नवो भवति जायमानोद्राम" इत्यत्राशीर्वादरूपम्। इत्यादीनि मन्त्रलिङ्गानिप्रसिद्धानि तेषामध्ये स्थितं किमपि लिङ्गं उद्भिदादिषु पदेषु न दृश्यते। तदुक्तम्–

**उत्तमामन्त्रणास्यन्तत्वान्तरूपाद्यभावतः।**
**मन्त्रप्रसिद्धयभावाच्च मन्त्रतैषां न युज्यते।। इति**

अतः उद्भिदादिपदानां स्वतेऽविधायकानां विध्यर्थरूपभावनायाः कस्मिन्नप्यंशेऽनन्तर्भावात् मन्त्रत्वाभावाच्चार्थस्मारकत्वेन प्रयोजनवत्त्व-स्याप्यभवात् स्वाध्यायविधिगृहीतत्वेनार्थक्यानुपपत्तेः गुणादिविधित्वेनैव प्रामाण्यं न तु नामत्वंनेति पूर्वपक्षः। सिद्धान्तस्तु नाम्नामपिप्रयोजनवत्वेन प्रामाण्यमु पपद्यते। गुणादि विधित्वाङ्गीकारे च दोस्याग्रे वक्षमाणत्वात् उद्भिदादीनां नामत्वेनैव प्रामाण्यमिति। तथा हि– "यजेत" इत्यादिविधि पदेष्णु अंशद्वयभवगम्यते "यजि धातुः तप्रत्ययश्चेति, तत्र यागः धात्वर्थः भावना च प्रत्ययार्थः। भावनायां याग करणत्वेनान्वेति तस्य च परिचायकनामत्वेनोद्भिदादिपदमन्वेति, नाम्नाञ्च परिचायकत्वमितर-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्यावर्तकत्त्वेन व्यवहारहेतुत्वेन प्रमाणशास्त्रेणैव साधितम्। "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" "नामसङ्कीर्तनमुद्देशः" इति च। यद्यपि इतरव्यावतकत्वस्यपरिचायकत्वं लक्षणस्यैव प्रयोजनत्वमुक्तम्, तथापिनाम्नामपि लक्षणत्वेनेतरव्यावर्तकत्वं लोके दृश्यत एव। सङ्कल्पादौ नाम्नामुप्रयोगो भवति "यागोऽयमनुक्तीयत" इति। एवं नाम्नां प्रयोजनवत्त्वे सिद्धे नाम्ना कर्मभेदः, नाम्ना धर्मातिदेशः, नाम्ना दूरस्थस्यानुवाद इत्यादिप्रयोजनवत्ता निरूपयिष्यते। अस्मिन्नेव पादेऽग्रे उद्भिदादिपदानां श्येनादिपदानाञ्च कर्मनामत्वं साधयिष्यते।

## जैमिनीयन्यायमाला

**द्वितीयं वार्त्तिककारमतेनाधिकरणं निरूप्यते–**

**गुणेऽयं नामधेयं वा खनित्रेऽस्य निरुक्तितः।**
**ज्योतिष्टोमं समाश्रित्य पश्वर्थं गुणचोदना॥3॥**

**फलोद्भेदात् समानैषा निरुक्तिर्यागनाम्न्यपि।**
**नामत्वमुचितं यागसामानाधिकरण्यतः॥4॥**

## प्रकाशिंका

गुणोऽयं="उद्भिदा यजेत" इत्यत्र उद्भिदेति शब्दः गुणपरः उत नामधेयपर इति सन्देहे, अस्य निरुक्तितः खनित्रे=उद्भित्पदस्य "उद्भिद्यते भूमिरनेन" इति व्युत्पत्या खनित्रे शक्तिरस्तीति, ज्योतिष्टोमं समाश्रित्य पाश्वर्थं गुणचोदना=पशुफलाय ज्योतिष्टोमयाग एव उद्भिदेति पदेन खनित्राख्यो गुणो धीयत इति पूर्वपक्षे प्राप्ते यागनाम्न्यपि फलोद्भेदात्समानैषा निरुक्तिः=उद्भिद्यते फलंमनेनेति व्युत्पत्तिः यागेऽपि समाना अतः उद्भित्पदस्य शक्तिः यागेऽपि अस्तीति **यागसामानाधिकरण्यतः = "उद्भिदा यजेत" इत्यत्र उद्भित्पदस्य यागपदस्य च सामानाधिकरणस्य दर्शनात्, नामत्वः मुचितम्=** उद्भित्पदस्य यागनामत्वमेवोचितमिति सिद्धान्तः।

अयमाशयः–पूर्वाधिकरण इदं निर्णीतम् नाम्नामपि विधेयार्थ-परिच्छेदकतया प्रामाण्यमस्तीति, इदानीं कुत्र नामत्वेनान्वय कुत्र च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गुणत्वेनान्वय इति विशेषचिन्ता प्रवर्तते। अतः "उद्भिदा यजेत पशुकाम" इत्यादौ संशयः किमत्रोद्भिच्छब्दो गुणपरः उत नामधेयपर इति पूर्वपक्षस्या यं भावः-"दध्ना जुहोति" इत्यत्र यथा प्राप्तं होममुद्दिश्य दधिरूपो गुणो विधीयते तथाऽत्रापि ज्योतिष्टोमयागस्य पूर्वं विहितत्वात् ज्योतिष्टोमवाक्येन प्राप्तं यागमुद्दिश्य उद्भिदगणो विधीयते, उद्भिच्छब्दो यद्यपि क्वचिदर्थे न प्रसिद्धस्तथापि योगेन खनित्रवाचक इति वक्तुं शक्यते। अथवा दध्यादिशब्दाश्च क्वचिदर्थे रूढाः उद्भिच्छब्दश्च यौगिक इत्येतदेव वैषम्यमभिप्रेत्य यागोद्देशेन गुणविधिर्नेष्यते तर्हि "गोदोहनेन पशुकामस्य प्रणयेदित्यत्र यथा पशुफलोद्देशेन चमसपात्रस्थाने गोदोहनपात्रं विधीयते तद्वदत्रापि पशुफलोद्देशेनोद्भिद्गुणविधिर्भवतु सर्वथापि विधित्वेनैव वाक्यस्य प्रामाण्ये सम्भवे नामत्वमात्रं नोचितमिति। एवं पूर्वपक्षे प्राप्ते।

समाधिः-प्रथमे पक्षे "उद्भिदा यजेत पाशुकामः इति समग्रे वाक्ये यागोद्दोशेनोद्भिद्गुणविधाने फलपदं व्यर्थं स्यात्। द्वितीपपक्षे च फलोद्देशेन गुणविधाने उद्देश्यत्त्वेन फलपदं विधेयत्त्वेन गुणपदमित्युभयोः वैय्यर्थ्यं तु न भवति परन्तु "यजेत" इत्यस्य धातोरनुवादत्वं स्यात्। तदपि भवत्विति न वाच्यम्, "दध्ना जुहोति" "गोदोहनेन पशुकामस्य प्रणयेद्" इत्यादौ दधिगोदोहनादिशब्दानां निरूढत्वेन प्रकरणप्राप्तहोमाद्यनूद्य गुणविधिः युक्तः, अत्र तु उद्भिच्छब्दस्य निरूढत्वाभावात् उद्भिनत्ति पशून् प्रकाशयतीति व्युत्पत्या यागवाचकत्वसम्भवात् "उद्भिदा यजेत" इत्यत्र विधायकतप्रत्ययस्य समानपदोपात्तसन्निहितधात्वर्थमुल्लङ्घ्य पदान्तरोपात्तगुणविधायकत्वे स्वीकारे विधिविधेययोर्विप्रकर्षश्चापद्येत। किञ्च ज्योतिष्टोमस्योद्भिद्यागस्य च मध्ये बहूनां पदार्थानां व्यवधानात् प्रकरणविच्छेदात् प्रकृतवाक्ये ज्योतिष्टोमस्योद्देश्यतापि न सम्भवति। एतद्दोषवारणार्थं गुणविशिष्टकर्मविधिः "सोमेन यजेत" इत्यत्र यथा स्वीक्रियते तथात्राप्युद्भिद्वता यागेनेति स्वीक्रियतामिति वाच्यम्, मत्वर्थलक्षणादोषप्रसङ्गात्। "सोमेन यजेत" इत्यत्र तु सोमशब्दस्य लताविशेषे रूढत्वादगत्या मत्वर्थलक्षामाश्रित्य गुणविशिष्टकर्मविधानं स्वीक्रियते। उद्भिच्छब्दकस्य तु यौगिकत्वात् अवयवद्वारेण यागार्थकत्वसम्भवान्नामधेयत्वमेव युक्तम्। एवञ्च गुणविशिष्टकर्मविधाने मत्वर्थलक्षणाभयात् सन्दिग्धार्थक-स्योद्भिच्छब्दस्य यागसामानाधिकरण्यान्नामत्वं निश्चीयते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गुरुमतेनेदमधिकरणं निरूप्यते्–

### जैमिनीयन्यायमाला

**लौकिके गणयागेऽस्य विधेः सापोक्षतेति चेत्।**
**निरुकत्त्या श्रौतयागस्य नामत्वान्निरपेक्षता॥5॥**

### प्रकाशिका

"उद्भिदा यजेत" "विश्वजिता यजेत" इत्यादिसोपपदाश्चोदना अत्रोदाहरणम् एतादृशचोदनावाक्यं निरपेक्षतया प्रमाणमुताप्रमाणमिति सन्देहाः। यतः "दध्ना जुहोती"–तिवदत्रोद्भिद्गुणो विधीयते, गुणविधानार्थं कश्चन याग आश्रयत्वेनापेक्षते, तादृशयश्रौतयागस्याश्रुतत्वात् लौकिको मातृगणयागादिश्चाश्रयत्वेनापेक्षणीयः तथा सति सापेक्षत्वात् उद्भित्पदघटितं चोदनावाक्यं न प्रमाणमिति पूर्वपक्षे प्राप्ते उद्भिच्छब्दस्य व्युत्पत्त्या श्रौतयागनामत्वसम्भवात् लौकिकयागानामनपेक्षाऽऽभावाच्चोदनावाक्यमिदं निरपेक्षं प्रमाणमिति सिद्धान्तः।

तृतीयमधिकरणं निरूप्यते–

### जैमिनीयन्यायमाला

**यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत्।**
**चित्रस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ॥6॥**

**द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः।**
**स्यान्नामपृष्ठाज्यबहिष्पवमानेषु तत्तथा॥7॥**

### प्रकाशिका

"चित्रया यजेत पशुकामः" इति श्रूयते। अत्र च चित्राशब्दस्य चित्रत्वगुणवाचकत्वं रूढयैवास्तीति पूर्वाधिकरणोक्तोद्भिच्छब्दाद्विशेषः। अतः पूर्वाधिकरणन्यायोऽत्र न प्रवर्तते। चित्रयेत्यत्र प्रत्ययेन स्त्रीत्वस्य बोधात् स्त्रीत्वस्य च प्राणिद्रव्यकयाग एव निवेशस्य युक्तत्वात् पशुयागानां पकृतिभूताग्नीषोमीयपशुयागस्य पशूद्देशेन चित्रत्वगुणो विधीयते अतः अत्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गुणविधिरति पूर्वपक्षे प्राप्ते

उच्यते–"चित्रया" इत्यत्र प्रकृत्या चित्रत्वम्, प्रत्ययेन च स्त्रीत्वमिति गुणद्वयं प्रतीयते, तत्रोभयविधाने वाक्यभेदः स्यात्, विशिष्टविधाने च गौरवम्। अतः दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इति वाक्यविहतेष्टेः बहुद्रव्यमिश्रितत्वात्तस्या नामधेयं चित्रापदम्। "चित्रया यजेत पशुकामः" इत्यनेन तस्या इष्टेः फलसम्बन्धो विधीयते अतः वाक्यभेदभयाच्चित्राशब्दः कर्मनामधेयमिति निश्चीयते। एवं "सप्तदशानि पृष्ठानि" "पञ्चदशान्याज्यानि" त्रिवृद्बहिष्पवमानम्" इत्यादाविध स्तोत्रानुवादेन द्रव्यसङ्ख्ययोर्विधौ वाक्यभेदः स्यादतः पृष्ठशब्दे अज्यशब्दे बहिष्पवमानशब्दे च कर्मनामत्वमेवेति निश्चीयते।

चतुर्थाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**अग्निहोत्रं जुहोत्याघारमाघारयतीत्यम्।**
**विधेयौ गुणसंस्कारावाहोस्वित्कर्मनामनी॥8॥**

**अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः।**
**गुणो विधेयो नामत्वे रूपं न स्यात् क्षरद्घृतेः॥9॥**

**संस्क्रियाघारमाघारयतीत्युक्त्वा द्वितीयया।**
**आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी॥10॥**

**अग्निर्ज्योतिरिति प्रोक्तो मन्त्राद्देवस्तथा घृतम्।**
**चतुर्गृहीतवाक्योक्तं द्वितीयायास्त्वियं गतिः॥11॥**

**नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा।**
**साध्यतां वक्ति संस्कारो नैवाशङ्क्यः क्रियात्वतः॥12॥**

## प्रकाशिका

उद्भिदधिकरणे यौगिकानामुद्भिदादिशब्दानां चित्राधिकरणे गुण एव रूढानां चित्रादिशब्दानां क्रमशः मत्वर्थलक्षणाभयाद्वाक्यभेदभयान्नामपरत्वं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निर्णीतम्। इदानीं रूढानां यौगिकानाञ्च सम्भवत्प्राप्तिकानामग्निहोत्राघारादिशब्दानां चिन्ता प्रवर्तते। "अग्निहोत्रं जुहोति" "आघारमाघारयति" इति वाक्यद्वयं श्रुतम्। तत्राग्निहोत्राघारशब्दाभ्यां गुणोविधीयत उत कर्मनामधेयत्वं बोध्यत इति सन्देहः। अत्र गुणपदेन यागस्य रूपद्वयं गृह्यत अर्थाद् देवतोद्देशेन द्रव्यत्याग एव याग इति द्रव्यं देवतेति यागस्य रूपद्वयमत्र गुणपदेन ग्राह्यम्। प्रकृते प्रथमवाक्येन "अग्नये होत्रमस्मिन्निति बहुव्रीहिसमासाश्रयणेन देवताया बोथो मत्वर्थं विनैव भवति, अतः मत्वलक्षणाभयाभावाद् वाक्यभेदस्याप्यप्रसक्तेः, अग्निहोत्रपदेन कर्मणे नामत्वं बोध्यत इति स्वीकारे देवताया प्रप्त्यभावात् कर्मणो विधेयस्यारूपत्वं स्यादतः गुण एवानेन वाक्येन विधीयत इति पूर्वपक्षः। "आघारमाघारयति" इति द्वितीयवाक्येन च आघ्रियते क्षार्यतेऽनेनेति विग्रहेण क्षरणसमर्थाज्यद्रव्यस्य विधिः मत्वर्थलक्षणां विनैव सिद्धयति, अत्रपि वाक्यभेदसयाप्रसक्तेः, आधारयतीन्यनेन क्षारणं विधीयते, एवञ्च क्षारणेन आधारमाज्यं संस्कुर्यादिति क्षारणकर्मण गुणरूपेणाज्यमनेन वाक्येन विधीयत इति गुणविधिर्युक्तः। संस्कृउतस्यार्थात् क्षारणेन संस्कृतस्याज्यस्य प्रोक्षितश्रीहीणामन्यत्रावधातादौ विनियोगवद्दुपांशुयाजे विनियोग इति उक्तवाक्ययोः क्रमशः देवतायाः द्रव्यस्य विधाने तात्पर्यमिति पूर्वपक्षे प्राप्ते–

उच्यते–"अग्निहोत्रं जुहोति" "आधारमाघारयति" इत्यत्र अग्निहोत्र-धारशद्वौ कर्म वाचकौ न तु गणविधायकाविति। "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति। सूर्यो ज्योमतिर्ज्योतिः सूर्यः स्वाहेमति प्रातः" इति मन्त्रेणग्निहोत्रकर्मणे देवतायाः प्राप्ति, "चतुर्गृतहीतं वा तदभूत् तस्याधारमाधार्य" इत्यनेन आज्यद्रव्यस्य प्राप्तिराधारकर्मणे भवतीति आधारकर्मणे द्रव्यस्याग्नि-होत्रस्य देवतायाः प्रख्यपकस्य शास्त्रान्तरस्य श्रवणात् वाक्यद्वये गुणविधित्वे तच्छास्त्रस्य वैय्यर्थ्यापत्तेः आधाराग्नि होत्रशब्दयोज कर्मनामतवमेव युक्तम्। एवञ्चाग्निसूर्यदेवताकस्य सायंप्रातःकालयोरनुकेयस्य कर्मणोऽग्निहोत्रमिति यौगिकं नामधयेम्। आधारवाक्येनापि आधाराख्यहोमो विधीयते, जुह्वां प्रयाजार्थं यच्चतुर्गृहीतमाज्यं तदेकदेशेनाधारख्यं कर्मनिर्वर्त्यानन्तरं प्रयागाज कर्तव्या इति वाक्यार्थो भवति। न चोद्भिदा यजे3त, चित्रया यजेत इत्यत्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तृतीयाविभक्तिः प्रत्ययार्थभावनायांमुद्भिचित्रयागयोज करणत्वं बोधयतीति उभयत्र कम्रनामत्वं; "अग्निहोत्रं जुहोति" "आधारमाधारयति" इत्युनयत्रग्निहोत्रमाधारमिति द्वितीययाविभक्तिरस्ति, अतः साध्यत्वावगमात् कर्मनामत्वं न युक्तमिति वाच्यम्, फलभावनाकरणस्यापि यागस्य "नासाधितं करणभिः" ति न्यायेनार्थाक्षिप्तसाध्यत्वाभिप्रायेणभयत्राग्निहोगमाधारमिति द्वितीया युज्यत एव। प्रयोजनश्व पूर्वपक्षे अविहितदेवताकेषु दर्वीहोमेषु "अग्निहोत्रं जुहोति" इति वाक्येन देवतालाभः, उपांशुयाजे आज्यस्य संस्कारलाभश्च। सिद्धानो तु अग्निहोत्रास्यस्याधाराख्य स्म कर्मान्तरस्य सिद्धिः, दर्वीहोमेषु च मन्त्रवर्णैरेव देवतालाभः प्राकरणिकः प्रधानदेवताभिरेव वा तेवां निर्गहः न तु अग्निदेवता वाक्येनानेन बोध्यते, उपांशुयाजार्थस्याज्यस्य क्षारणसंस्कारभावश्चेति। इदानीं पञ्चमाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**श्येनेनाभिचरन् मर्त्यो यजेति श्रुतौ गुणः।**
**विधीयते पक्षिस्यो नाम वा तस्य कर्मणः॥13॥**

**श्येनेनेति गुणः काम्यः सौमिकः सोमबाधगा।**
**न चित्रावद्वाक्यभेदो रूढेश्चैवमनुग्रहः॥14॥**

**यथा वै श्येन इत्युक्त्वा ह्युपमानोपमेयता।**
**नैकस्मिंस्तेन गौण्यास्य वृत्त्यास्यात् कर्मनामता॥15॥**

## प्रकाशिका

"श्येनेनाभिचरन् यजेत" "यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निषत्त्यादत्ते यमभिचरति श्येनेन" इति श्रूयते। अत्र श्येनशब्दो गुणविधायकः उत कर्मवाचक इति सन्देहः। अत्राभिचरणं शत्रुवधः, यजिना च प्रकृतज्योतिष्ठोमोगृह्यते, श्येनशब्दः पक्षिविशेषे रूढः, अतः वैय्यधिकरण्यान्वयेन मत्वर्थलक्षणां श्येनगुणे विधीयते–ज्योतिष्टोमसाधनेन श्येनेन शत्रुवधं कुर्यादिति वाक्यार्थबोधः। अत एव उद्भिन्नयास्य चित्रान्यायस्य चाप्रसक्तेः श्येनगुणविधायशास्त्रान्तरस्याप्यदर्शनात् तत्प्रख्यन्यायस्याप्यप्रसक्तेः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र गुणविधिरेवेति पूर्वपक्षे प्राप्ते उच्यते– "श्येनेनाभिचरन् यजेत" इत्यत्र श्येनशब्दः कर्मवाचक एव स्वीकार्यः, वाक्यशेषानुरोधात्। अत्र यथा श्येनपक्षिः निपत्यादत्ते एवमयं द्विषनां भ्रातृव्यमादत्ते अर्थात् यथा श्येनः प्रसह्य नियतन्त्र स्वाभिलषितं प्राणिनं गृह्णात्येव तथायं श्येनयागः इत्यर्थवादेन यागः स्तूयते। अत्र श्येनपक्ष्युपमानेन श्येनयागस्य स्तुत्या अत्रोक्तः श्येन एवमयमिति शब्देनः प्रसिद्धश्येनादन्य इति "श्येनेनाभिचरन् यजेत" इत्यत्र श्येनशब्दो गुणपरोन स्यादतः मत्वर्थलक्षणावाक्यभेदभयप्रख्यापकशास्त्रान्तरा-भावेऽपि व्यपदेशाद् उपमानादत्रोपमानोपमेयभावान्यभानुवपत्त्याकर्मनामधेयपर इति भावः।

षष्ठामधिकरणं निरूप्यते–

### जैमिनीयन्यायमाला

**यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः।**
**नाम वा गुणता तन्त्रयोगाद्गुणफलद्वये।।16।।**

**साधारणयजेः कर्मकरणत्वेन तन्त्रता।**
**त्रिकद्वयं विरुद्धं स्यात् तन्त्रतायां फलं प्रति।।17।।**

**उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः।**
**उद्देश्यान्विलमुख्यत्वत्रिकं तस्य गुणं प्रति।।18।।**

**त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः।**
**वाजपेयोपि शब्दोऽपि कर्मनामाग्निहोत्रवत्।।19।।**

### प्रकाशिका

"वाजपेयेन स्वाराज्यकामो यजेत" इति श्रूयते। अत्र "प्रजापतिरकामयत वाजमाप्नुयात् स्वर्गं लोकमिति स एतं वाजपेयमपश्यक् वाजं पेयो वा एव वाजपेयः एतेन स्वर्गं लोकमाप्नोति" इति ताण्डिब्राह्मणेऽर्थवादो दृश्यते। अतः वाजं पेयमस्मिन्निति वाजपेयशब्दः योगेन कर्मवाचको भवति, इति वाजपेयशब्दस्य कर्मनायत्वव्यवस्थापनार्थं पूर्वोक्ताधिकरणयतुष्येनाक्षेपसङ्गत्येद-मधिकरणं प्रवर्तते। द्वितीयाधिकरण "उद्भिदा यजेत" इत्यत्र मत्वर्थत-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्षणभ्यानामत्वं स्वीकृतम्। प्राधान्येन तदत्रभिप्यते–"यजेत" इत्यत्र धात्वर्थस्य भावनायां करणत्वेनान्वयेन भावनाया आकाङ्क्षाया शानतत्त्वेन तत्र भावनायामुद्भिदादेः करणत्वेनान्वयस्यासम्भवाद् गुणविधित्वपक्षे मत्वर्थलक्षणा-वश्यमङ्गीकार्येति लक्षणाभयान्नामत्वं स्वीकृतम्, परन्तु तन्नाक्षेपते। यतः "यजेत" इत्यत्रैकपदोपात्तत्त्वेन भावनाया यजेश्च सम्बन्धमात्रं प्रतीयते। सम्बन्धविशेषस्तु आक्षेपणैव सिद्ध्यति । यत्र गुणविधौ यात्वर्थो होमः वाक्यन्तरेण प्राप्तस्तत्र प्रत्ययवाच्यभावनायां धात्वर्थस्य साध्यत्वेनान्वयोऽपि स्वीक्रियते। लौकिकव्यवहारेऽपि "देवदत्तः पचति" इति यत्र द्वितीययान्तपदं विना पचतीत्यस्य प्रयोगस्तत्र पाकं करोतीति विवरणं क्रियते, यत्र च पचत्योदनमिति प्रयोगस्तत्र द्वितीयान्तपदस्य पृथक्श्रवणात् पाकं करोत्योदनमिति विवरणस्यानुपपत्या पाकेनौदनं करोतीति विवरणं क्रियते इति सर्वत्र धात्वर्थस्य करणत्वेवैदान्वय इति नियमाभावात् कर्मत्वकरणत्वयोः साधारणं सम्बन्धमात्रं यजेतेत्यनेन यागभावनयोरवगम्यते। अतः "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र साधारणस्य यजेः गुाफलाभ्यां सह युगपत्सम्बन्धे समति यथेचितसम्बन्धविशेषस्तत्र तत्र पर्यवस्यति। एवं तन्त्रेण सम्बन्धे सम्भवति सति मत्वर्थलक्षणाभयाभावाद् वाजपेयशब्दस्य गुणपरत्वमेवास्तु इति पूर्वपक्षे प्राप्ते

समाधिरुच्यते–साधारणस्य यजेः तन्त्रेणोभय सम्बन्धाङ्गीकारे मत्वर्थलक्षणाभ्यन्तु मास्तु। विरुद्धत्रिकद्वयापत्ति स्तु स्यादेवः तद्यथा–उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वञ्चेति त्रयाणां धार्माणामेकं फलनिष्ठं त्रिकम्। उपादेयतं विधेयत्वं गुात्वञ्च्चेति त्रयाणं धर्माणामेकं साधननिकत्रिकम्। अत्राचार्यैः श्लोकेऽनुद्यत्वमसूक्तिपदेनोक्तम्। एतत् त्रिकद्वयं मिथः क्रमेण विरुद्धम्। अत्र यजेत इत्यत्र प्रत्ययवाच्यभावनायाः फलं स्वाराज्यम्। साधनञ्च्च यागः। तत्राद्यमुद्देश्यत्वादित्रिकं साधनीभूतयागनिष्ठम्। स्वाराज्यमुद्दिश्य याग उपादीयते। स्वाराज्यफलमनूद्य यागो विधीयते। यागस्य स्वाराज्यफलार्थत्वात् स्वराज्यफलमुख्यम्, स्वाराज्यसाधनत्वाद्यागोगुणः। अत्र उद्देश्यत्वं नाम अपेक्षाविषयत्वमुद्द मन उपाधिकम्। अनुवाद्यवञ्च ज्ञातस्य कथनम्, एतञ्च शब्दोयाधिकम्। उपादेयत्वश्च्चानुष्ठीयमानत्वमेतच्छरीराषाधिकम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधेयत्वश्च्वाज्ञातस्यानुकेयत्वकश्चनम्, एतञ्च उद्देश्यत्वोपादेयतवयोर्विरोधः। एवं यदपेक्षतं फलम् तत्तादैव कथमनुष्ठातुं शक्यत इति अनुवाद्यत्वविधेयत्वयोविीधः। मुख्यतत्वगुात्वयोर्विरोधस्तु सिद्ध एव। प्रकृते "वाजपेयेन स्वराज्यकामो यजेत" इत्यत्रं यागस्य साधनत्वेन साध्यतेन चेति प्रकारद्वयेन भावनायां युगपत्तन्त्रेण सम्बन्धाङ्गीकारे साधनत्वमूलका उपादेयत्वादयस्त्रयो धर्मा यागेऽङ्गीकर्तव्याः, साध्यतवाञ्च तदैव तत्र तन्मूलका उद्देश्यतवादयस्त्रयो धर्माः प्रप्नुवन्ति। अतः विरोधाद् युगपत्तन्त्रेण भावनंया सह सम्बन्ध वक्तुं न शक्यत इति विरुद्धत्रिकद्वयावत्तिदोषाय भवति। एतद्दोषवारणार्थं यजेतेत्यस्यावृत्त्या वाजपेयद्रव्येणयागं कुर्याद् यागेन्न च स्वाराज्यं भावयेदित्येवमुभयसम्बन्ध स्वीक्रियत इति चेद् वाक्यीभेदः प्रसज्यते। अत्रेद्धिदधिकरणन्यायेन वाक्यभेदभयापेक्ष्ज्ञया लघुभूतस्य मत्वर्थलक्षणादोषस्य भयाद्वाजपेयशब्दः कर्मवाचक इति युक्तम्।

इदनीं सप्तमाधिकरणं निरूप्यते–

### जैमिनीयन्यायमाला

**यदाग्नेयोऽष्टाकपाल इति नाम गुणोह्यथवा।**
**नामाग्निहोत्रवन्मैवं नामत्वे देवता नहि॥20॥**

**मन्त्रोऽपि नेह प्रत्यक्षस्ताद्धिताद्देवताविधिः।**
**देवद्रव्यविीष्टस्य विधानादेवकवाक्यता॥21॥**

### प्रकाशिका

नामधेयापवादचिन्तयेदमधिकरणं प्रवृत्तम्। "यदाग्नेयोऽष्टाकपालोऽमावास्थायां पौर्णमास्याञ्चाच्युतो भवति" इति श्रूयते। अत्र वाक्ये आग्नेयपदं नामसमर्पकमुत गुारूसमर्पकमिति सन्देहः। अत्र अष्टकपालद्रव्यस्याभवास्यादिकलस्य च विधाने वाक्यभेदप्रसङ्गाद् "अग्निर्मूर्धा" इत्यादि मन्त्रवर्णैः देवतायाः प्राप्तत्वात् तत्प्रख्यान्यायेनाग्निहोत्रकर्मवदग्निसम्बन्धं निमित्तीकृत्य प्रवृत्तोऽयमाग्नेयशब्दः कर्मनामधेयमित्ति पूर्वपक्षे प्राप्ते समाधिरभिधीयते–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र वाक्ये "आग्नेय" इति तद्धितान्तपदम्, द्रव्यदेवतासम्बन्धं बोधयति। यागमन्तरा द्रव्यदेवतासम्बन्धस्यानुपपन्नत्वात्। अष्टकयालशब्दः कयालेष्वट सु संस्कृतस्य द्रव्यस्य वाचकः। न चैवं वहूनां गुणनां विधाने वाक्यभेदः विशिष्टविध्यङ्गीकारात्। न च देवताया मन्त्रवर्णेनांग्निर्मूर्धा इत्यादिना प्राप्ति, यतः मन्त्रवर्णप्रप्त्यपेक्षया तद्धितान्तपदेन प्राप्तर्वलीयस्त्वात्" तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः। देवताया विधिस्तत्र दुर्वलन्तु परम्परम्" इति वार्तिकेक्तेः, अग्निहोत्रेपदे तु तद्धित प्रत्ययाभावान्मन्त्रवर्णेनदेवता-प्राप्तिमाश्रित्य तत्प्रख्यान्यायेन नामतवमाश्रितम्, अत्र तु तद्धतप्रत्ययेन देवतायाः प्राप्ते मन्त्रवर्णेन प्रापितर्वक्तु न शक्यत इति तत्प्रख्यान्यायस्याप्रसरात् अगत्या आग्नेयशब्द गुासमर्पक एव। अग्निदेवताकाष्टकपालद्रव्यक-पौर्णमास्यमावास्याकालकर्तव्याताकेन यागेन भावयेदिति विशिष्टविधिः स्वीक्रियते। "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयतन्ते वहवोऽप्येकयत्नतः" इति न्यायेनागगुणविशिष्टकर्मविधिः।

एतदधिकरणं गुरुमतेन निरूप्यते–

### जैमिनीयन्यायमाला

**यदाग्नेय इति प्रोक्तं न मानं विध्यसम्भवात्।**
**इति चेन्न विशिष्टार्थविधौ सत्यप्रमा कुतः।।22।।**

### प्रकाशिका

अत्र आग्नेयपदं नामसमर्थकमुत गुणसमर्म्थकमिति विचारस्य प्रमाणध्यायेऽप्रसक्तेः समग्रं वाक्यमिदं वाक्यभेदादिदोषम्भवात् विधिमुखेन प्रमाणं न भवीतीति पूर्वपक्ष प्राप्ते प्रत्येकविधौ वाक्यभेदप्रसक्तिः विशिष्टविधौ तन्त्र प्रसज्यत अत विशिष्टकर्मविधायकत्वेन वाक्यमिदं प्रमाणमेवेति सिद्धान्तः।

सम्प्रति अष्टमाधिकरणं निरूप्यते–

### जैमिनीयन्यायमाला

**बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः।**
**जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिनः।।23।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेयोः।
विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचितनः।।24।।

### प्रकाशिका

एतावतां वधिकरणसप्तकेन नामधेयानां कथं प्रामाण्यम्? नामधेयतसीकारे कानि निमित्ता नीति सापवादं कर्मनामत्वविचारः कृतः। इदानीं प्रसङ्गात् कर्मनामत्वविचारप्रस्तावे द्रव्यनामत्वविचारः त्रिभिरधिकरणै प्रवर्तते। तत्र रूढाः, यौगिका, योगरूढा इति शब्दानां त्रैविध्यं स्वीक्रिँते, यथा घटपटादिशब्दा घटतदिजातिनिमत्ताः रूढाः, पाचकादिशब्दाः पाकक्रियाकर्तृत्वादिनिमित्ताः यौगिकाः, पङ्कजादिशब्दाश्च योगरूढा इति प्रसिद्धाः। अत्रापि क्रमशः रूढशब्दानां यौगिकशब्दानां योगरूढशब्दानां विचाारः प्रवर्तते। प्रथमं बर्हिराज्याधिकरणम्। अत्र "बर्हिणि हवींष्यासादयति। तेऽपश्यन् पुरोडाशं कर्मभूतम्। पशोर्वै प्रतिमा पुरोडाशः। धानाः करम्भः, परिवादः, पुरोडाशः आज्यस्यैव नः उपांशु पूर्णमास्यां यजतिं त्यादौ श्रुता बर्हिराज्यपुरोडादिशब्दा लवनादिसंस्कारं निमित्तीकृत्य प्रवृत्ता उत जातिं निमित्तीकृत्येमति सन्देहः। पूर्वपक्षस्तावत् "वर्हिर्लुनाति" आज्यं विलापयति" "पुरोडाशं चतुर्धा करोती"–त्यादौ बर्हिः आज्यञ्चोद्दिश्य लवनं विलापनं वा न विधीयते अपि तु वर्हिः आज्यञ्च कर्तुं क्रमशः लवनं विलापनञ्च विधीयेते यथा "यूथं तक्षति" "यूपमष्टाश्रीकरोतीं" त्यादिविधानानि यूपमुद्दिश्य न भवन्ति अपि यूपं कर्तुं विहितानि। अतः संस्कारनिमित्तका बर्हिराज्यादिशब्दा इति पूर्वपक्षप्राप्ते उच्यते–लोकेऽपि अर्थाल्लौकि व्यवहारेऽपि "बर्हिशदाय गावो गताः" आज्यं क्रीणातीतयादिप्रयोगदर्शनाज्जतिंनिमित्तीकृत्य एते शब्दाः प्रवृत्ता इति सिद्धान्तः। यूपस्य तु तक्षणदिव्यापाराल्पूर्वं प्राप्तेरेवाभावात्क शास्त्रैकगम्यत्वासूपक्ष्य तक्षणादिविधीनां यूपं कर्तुं प्रवृत्तिरिति वैषम्यम्। बर्हिराज्यादिशब्दास्तु लोकेऽपि जातिं निमित्तीकृत्य प्रवर्तन्ते अत उक्तविधिवाक्येष्वपि बर्हिराज्यादिशब्दानां जातिनिमित्तकत्वं युक्तम्। प्रयोजनञ्च पूवपक्षे "बर्हिं अरूसषा यश्रूपावहं स्तृणतिं "आज्येन यूपमनक्ति" एककपालेन पुरोडाशेन प्रातश्नुवाकमुपा करोती त्यादौ संस्काराणं प्रवृत्तिः सिद्धान्ते तु तदप्रवृत्तिरिति भेदः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गुरुमतेनेदमधिकरणं निरूप्यते—

जैमिनीयन्यायमाला

**बर्हिरादौ निमित्तस्य दुवर्चत्वान्न मेतिचेत्।**
**जातेस्तत्र निमित्तत्वात् तद्युक्ता चोदना प्रमा॥25॥**

प्रकाशिका

बर्हिर्लुनातीत्यादीनि बर्हिरादि शब्दघटितानि वाक्यानि बर्हिरादिशब्दानां किं निमित्तमिति निर्णयस्यासम्भान्न प्रमाणनीति पूर्वपक्षे प्राप्ते उक्तशब्दानां जातिनिमित्तकत्वनिर्णयसम्भवात्तसहितानि वाक्यानि प्रमाणान्येवेति सिद्धान्ता:।

इदानीं वमाधिकरणं निरूप्यते—

जैमिनीयन्यायमाला

**प्रोक्षणी: संस्कृतिर्जातिर्योगो वा सर्वभूमिषु।**
**तथोक्ते: संस्कृतिर्जाति स्याद्रूढे: प्रबलत्वत:॥26॥**

**अन्योन्याश्रयतो नाद्यौ न जाति: कल्प्यशक्तित:।**
**योग: स्यात् क्लृप्तशक्तित्वात् क्लृप्तिर्व्याकिरणाद्भवेत्॥27॥**

प्रकाशिका

"प्रोक्षणीरासादय" "प्रोक्षणीरुत्पुनाति" इत्यादौ प्रोक्षणीशब्दस्य प्रवृत्तिनिमित्तं किमिति विचार्यते—किम् अभिमन्त्रणासादनादिसंस्कार निमित्तक: प्रोक्षणीशब्द: उत "प्रोक्षणीभिरुद्वेजिता:" इत्यत्र लौकिकप्रयोगे जलक्रीडायां प्रयोगदर्शनात् पूर्वाधिकरणन्यायेन जातिनमित्तिक: उत प्रोपसर्गकोक्षधातो: करणे ल्युटि व्युत्पन्न: यौगिक इति त्रिधा सन्देहे प्रथमपक्षे संस्कारनिमित्तकत्वे विहितसंस्काराणामनुष्ठानानन्तरं संस्कृतास्वप्सु प्रोक्षणीशब्द: प्रवर्तते, प्रोक्षणीशब्दस्य प्रवृत्त्यनन्तरं तज्ज्लमन्द्याभिमन्त्रणादिसंस्कार प्रवर्तत इत्यन्योन्याश्रयतापत्ति:। द्वितीयपक्षे प्रोक्षणीशब्दस्य जातिनिमित्तकत्वे वृद्धव्यवहारे उदकत्वजातौ तच्छकस्य प्रयोग: दृश्येत, परन्तु तथा न दृश्यते अत: जातिविशेषं शब्दोऽयं रूढ इति वक्तुं न शक्यते, प्रपूर्वकादुक्षसेचन इति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

घातोः करणे ल्युटिनिष्पन्नः प्रकष्टसेचन साधनतावाचकत्वं योगेनैव सिद्धयतीति यागनिमित्तकोऽयं शब्द इति यौगिकत्वमेव युक्तम्। न च "योगाद् रूढेर्बलीयस्त्वाद्" क्वचिद्व्यवहारे "प्रोक्षणीभिरुद्वेजिताः स्मः" इत्यादौ जले प्रयोगदर्शनात् जातिनिमित्तकोऽयं शब्दः रूढ इति वाच्यम्, प्रोक्षणात् प्रोक्षणीति व्युत्पत्त्या जनवाचकत्वे निश्चितेऽन्यत्र तच्छब्दप्रयोगो भवति न तु प्रोक्षणीशब्दः जले कलृप्तः। बहिराज्यादिशब्दास्तु जातिनिमित्तका इति ते शब्दास्तदर्थे क्लृप्ताः, अन्यत्र क्लृप्लैव रूढिर्योगस्य बाधिका। अत्र "योगाद्रूढिर्वलोयसी" ति न्ययस्याप्रसरात् प्रोक्षणीशब्दः यौगिक एवेति सिद्धान्तः। प्रयोजनञ्च प्रोक्षणीशब्दस्य संस्कारनिमित्तत्वपक्षे "प्रोक्षणीरासादय" प्रोक्षणीरुत्पुनाति" इति स्त्रीलिङ्गः बहुवचनानान्तस्यैव संस्कारवाचकत्वात् आज्येऽपि सोमारौद्रचरौ आज्यं प्रोक्षणमिति विहितेऽपि प्रोक्षणीरित्येव प्रयोगः स्वीकार्यः। जातिनिमित्तकतपक्षे द्वितीये आज्यत्वजातिप्रकाशनाय आज्यमाखदयेति प्रयोग स्वीकार्यः स्यात्। सिद्धान्ते यौगिकत्वात् प्रोक्षणमासादमेति लिङ्गवचनोहेन प्रयोग इति विशेषः। किञ्च जातिनिमित्तकत्वपक्षे जलत्वजातिनिमित्तकले धृतादेः प्रोक्षणत्वं न स्याद् धृतत्वजातिनिमित्तकत्वे जलस्य प्रोक्षणत्वं न स्याद् धृतत्वजातिनिमित्तकत्वे जलस्य प्रोक्षणत्वं न स्यात्। सिद्धान्तं तु धृतादेः जलस्य च प्रोख्क्षणत्वमिति सिद्धयति।

इदानीं दशाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्तनम्।**
**आद्यौ पूर्ववदन्त्योऽचिरजातिर्नावनीतवत्॥28॥**

## प्रकाशिका

अत्र रूढशब्दानां यौगिकशब्दानां विचारानन्तरं योगरूढाशब्दनामत्र विचारमुखेन द्रव्यनामधेयविचारः प्रवर्तते। "निर्मन्थ्येनेष्टका पचन्ति इति श्रुतां निर्मन्थ्यशब्दः जातिनिमित्तक उत योगनिमित्तकः इति विषये सन्देहे निदित्युवसर्गकमन्थतेः" "ऋहलोर्ण्यत्" इति कर्मणि ण्यति निष्पन्नस्यावयवयोगेन मन्थनकर्मतावयित्वसम्भवात् प्रोक्षणीशब्दवयौगिकत्वं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निर्मन्थ्यशब्दस्य वक्तुं न शक्यते। यतः प्रोक्षणीशब्दस्य व्युत्पत्त्या प्रकृष्टसेचनसाधनतावाचित्वाद् अप्सु च सेचनसाधनत्वस्य सर्वदा सतात् यांगिकत्वं युक्तम् प्रकृते निर्मन्थ्यशब्दस्य व्युत्पत्त्या लभ्यस्य मन्थनकर्मतावाचित्वस्य मन्थनजन्यनिष्पत्त्यवस्थालक्षणफलशालिलार्थकस्य निष्पन्नावस्थायामर्थात् पाकसाधनीभूतेऽग्नौ न सभाव्यते, अतः अत्सु सेचनसाधनत्ववत् मन्थनकर्मत्वस्याग्नौ सर्वदाऽसत्वात्, लोके च "निर्मन्थ्यमानय ओदनं पक्ष्यामहे" इति निष्पन्नवस्थायामग्नौ निर्मन्थ्यशब्दस्य प्रयोगदर्शनाद यौगिकत्वं न युक्तमिति जातिनिमित्तकोऽयं शब्द इति ब्रर्हिराज्यादिवदिति पूर्वपक्षे प्राप्ते।

उच्यते–निर्मन्थ्यशब्दस्य योगेनाप्यग्निवाचकत्वं युज्यत एव। निष्पत्त्यवस्थापन्नव्यक्तेर्निष्पन्नव्यकोश्च भेदे सत्यपि अग्निसन्तानस्यैकत्वेन व्यक्तीनामेकत्वामापाद्य भूतपूर्वगत्या निष्पन्नवस्थयामपि अग्नौ अवयवार्थयोगस्य सम्भवात् यथाकयग्निदवयवयोगेनैवोपपत्तावत्यन्तादृष्टरूढिकल्पनाया अयुकनत्वात् योगेनापि निर्मन्थ्यशब्दस्याग्निवाचकत्वात् अचिरमन्थन-क्रियाजन्याग्नौ यज्ञिकानां निर्मन्र्थशब्दप्रयोगदर्शनाञ्च पङ्कजादिशब्दवन्नानव-नीतिशब्दवच्च योगरूढत्वमेव युक्तमिति सिद्धान्तः। यथा पुराणनूतनयोर्धृतयोः नवनीतजन्यत्वेऽपि सद्योजन्ये नूतन एव धृते नावनीतशब्द प्रयज्यते तथ अचिरमन्थनजन्याग्निरेव निर्मन्थ्यशब्देनोच्यत इति युक्तम्। प्रयोंजनश्च "निर्मन्थ्येनष्टकाः पचन्ति" इतयात्रग्नेः पाकसामथ्यादेव प्राप्तत्वान्थनांशे विधिरिति प्रयोगमध्ये मन्थनेनैवाग्नि सम्पादनं कार्यमिति नियमः।

एकादशाधिकरणं निरूप्यते–

जैमिनीयन्यायमाला

चातुर्मास्याद्य पर्वप्रोक्ताग्नेयाद्यष्टकान्तिके।
वैश्वदेवेति शब्दोक्तो गुणः सङ्घस्य नाम वा॥29॥

नामत्वे रूपराहित्यादविधिर्गुणता ततः।
अग्न्याभिर्विकल्प्यान्ते विश्वदेवास्तु सप्तसु॥30॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनूद्याष्टौ यजेतेति तत्सङ्घे नाम वर्णितम्।
अविधित्वेऽप्यर्थवत् स्यान्नाम प्राक् प्रवणादिषु।।31।।

इज्यन्ते यजन्ते वा विश्वे देवा इतीदृशी।
निरुक्तिर्न विकल्पः स्यादुत्पत्त्युल्पन्तशिष्टतः।।32।।

## प्रकाशिका

वैश्वदेवः, वरुणप्रद्यासः, साकमेधः, शुनासीरीयश्वेति चतुर्भिः पर्वभिः चातुर्मास्य यागेऽनुष्ठीयते। तत्र प्रथमे पर्वणि "वैश्वदेवेन यजेत" इति विधिः श्रूयते, अत्र वैश्वदेवशब्दो गुणपर उत कर्मनाय धेयमिति विच्यिते। गुणविधिनामधेयविचारप्रकरणे आग्नेयाधिकरणे तत्प्रख्यन्यायासम्भवेन गुणविधित्वे साधिते द्रव्यनामधेयविचारे कृते यत्प्रसङ्गेन यदागतं तत्समाप्तौ तदेव पुनरूपस्थाप्यत इति न्यायेनाग्नेयाधिकरणेन सहापवादसङ्गत्येदमधिकरणं प्रवृत्तम्। अत्र पूर्वपक्षः वैश्वदेवशब्द गुणसमर्थकः। "अक्षय्यं ह वै चातुर्मास्य याजिनः सुकृतं भवति" इति चुार्मास्ययागः श्रुतः। तत्र "वैश्वदेवेन यजेतं इदं वाक्यं" अगन्येमष्टाकपालं निर्वपति, सौम्यं चरूं सावित्रं द्वादशकपालम् सारस्वतं चरूम, पौष्णं चरूम, मारूतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्" इति यागाां सन्निधौ निहितम्। वैश्वदेवशब्दश्च तत़िान्तः, विश्वेदेवा देवता अस्येति विग्रहेण देवतासमर्पकः। यद्यपि उपरि अष्टयागेषु "आग्नेय" मिथ्यादिवाक्यैः उत्पत्तिविधायकैरेव देवतानां विधेः सत्वात् देवताविधानं पृथकङ्नापेक्षते तथापि तासां देवतानां विकल्परूपेण वाकयेनानेन देवताविधिः सम्भवतीति गुणसमर्पकमिदं वाक्यमिति पूर्वपक्षे प्रप्ते

उच्यते–उत्पत्तिशिष्टगुणवरुद्धे यागे उत्पन्नशिष्टगुणानां निवेशायोगात् तत्प्रख्यन्यायेन अष्टस्वपि यागेषु द्रव्यदेवतयोः प्राप्तत्वात् "यद्विश्वे देवस्समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति निर्वचनानुरोधेन वैश्वदेवशब्दो यागनामधेयमिति सिद्धान्तः। सिद्धान्ते प्रयोजनन्तु "प्राचीनप्रवणे वैश्वदेवेन यजेत" इत्यत्र वैश्वदेवशब्देनाग्नेयाद्यष्टानां यागानां सङ्घस्य ग्रहणं कर्तुं शक्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्प्रति गुरुमते वेदमधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**गुणनामत्वसन्देहादप्रभा चोदनेति चेत्।**
**नोक्तन्यायेन सङ्घस्य नामधेयत्वनिर्णयात्।।33।।**

**प्रकाशिका**

गुरुमते पूर्ववदेवेदं वाक्यं सन्दिग्धशब्दघटितत्वदप्रमाणं प्रमाणं वेति विशये वैश्वदेवशब्दस्य नामत्वनिश्चयादेतच्छकघटितं चोदनावाक्यं प्रमाणमेवेति सिद्धान्तः।

द्वादशाधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**यद् द्वादशकपालेष्टेवैंश्वानर्या अनन्तरम्।**
**श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः।।34।।**

**अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत्।**
**द्रव्यं द्रव्यान्तरे नो चेद् गुणस्तर्हि फले त्वसौ।।35।।**

**वाक्यैक्यमुपसंहाराद् विस्पष्टं तत्तु बाध्यते।**
**नानागुणविधौ तस्माद् अंशद्वारांशिसंस्तुति।।136।।**

**प्रकाशिका**

क्रमशः अग्निहोत्रम् दर्शपूर्णमासौ चातुमास्यमिति नित्यकर्मणां विचारं परिसमाप्य नैमित्तिकर्मविारः प्रस्तूयते। "वैश्वानरं द्वादशकपालं निर्वदेत् पुत्रे जाते" इति पुत्रजन्मनिमित्तविचारः प्रस्तूयते। "वैश्वानरं द्वादशपालं निर्वचेत् पुत्रे जाते" इति पुत्रजन्मनिमित्तवैद्वानरेष्टिः श्रयूते। अत्र एतद्विधिावाकयानन्तरं "यदष्टाकपालो भवति गायत्र्यैदेनं ब्रह्मदर्थसेन पुनाति" यन्नवकपालस्त्रि-षृतैवारिस्मँस्तेजो दधाति "इत्यादिवाक्यानि श्रूयन्ते। अत्र वैश्वानरवाक्यं नैमित्तककर्म विधयकमिति स्पष्टम्। पदष्टाकपालादि वाक्यानारेषु चिन्त्यते कि अष्टाकपालादिशब्दा वैश्वानरेष्टेः नामधेयानि उत गुणविषयः अथवा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अर्थवादा इति त्रिधा संशयः। अत्र पूर्वपक्षः-पूर्वाधिकरणे वैश्वदेवशब्दस्य तत्प्रख्यन्यायेन कर्मनायत्वमुक्त्वम्, अत्रापि वैश्वनरेष्टेः द्वादशकपालस्य द्रव्यत्वम् प्राप्तमिति उतपत्तिशिष्टगुणावरोधाद् गुणन्तरस्य विधानं न सम्भवतीति अष्टत्कपालादिकर्मनामधेयानीति। नामधेयत्वस्वीकारे प्रयोजनस्यात्रादर्शनान्नाम-तस्वीकारो न युक्तश्चेत् "गोदोहवेन पशुकामस्य प्रणमेदि" ति वत् फलाय गुणविधिः स्यादिति पूर्वपो प्राप्ते।

उच्यते–उपक्रमे "वैश्वानरं द्वादशकपाल–" मिति श्रुतम्, उपसंहारेऽपि "यद्द्वादशकपालो जगत्येवास्मिन् पशून दधाति" इति श्रूयते। अत उपक्रमोपसंहारयोरैक्येन द्वादशकपालेपुसंस्कृतपुरोडाशद्रव्यकस्य कम्रणः विधानमत्र ज्ञाते मध्ये गुणविधिस्वीकारे वाक्यभेदात्तेः अष्टाकपालादिक्यामर्थ-पादत्वमेव युक्तम्। शते पञ्चाशन्नयायेन द्वादशकपालानां मध्य अष्टकपालादनीनां अवयवत्वेनोपस्थिते सत्वादवयवस्तुत्यावयषी स्तूयत इति अष्टकपालादिवाक्यानां वैश्वानरेष्टेः स्तावकत्वेवैवार्थवत्वमिति न पृथक् कमौन्तरबोधकत्वम्।

गुरुमतेनेदमधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**अगुणत्वादनामतवादमन्त्रत्वादनन्वये ।**
**अष्टतद्यप्रमाणं चेन्नार्थवादतयान्वयात्॥37॥**

**प्रकाशिका**

गुरुमते "अष्टकपालो भवति" इतयादिवाक्यानां गुाविधायकत्वेन नामत्वेन मन्त्रत्वेन वा द्वादशकपालवाक्येन सहान्वयस्यासम्भषादप्रामाण्ये शङ्किते पूर्वोक्त प्रकारेणार्थवादत्वेनान्वयस्य सम्भावदोषां विध्येवाक्यमतया प्रमाण्यमेवेति सिद्धान्ताः।

सम्प्रति प्रयोदशाधिकरणं निरूप्यते–

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः।
सामानाधिकरण्येन स्यादेकस्यान्यनामता॥38॥

गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते।
अंशांशित्वाद्यभावेन पूववन्नात्र संस्तुतिः॥39॥

अर्थभेदादनामत्वं गुणश्चेत्प्रहियेत सः।
यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः॥40॥

## प्रकाशिका

पूर्वाधिकरणेऽष्टाकपालादिवाक्यानां वैश्वानरेष्टेः स्तावकत्वमुकाम्। यदङ्गभूतद्वादशकपालस्यावयवोऽष्टाकपालादिरप्येकैकफलसाधनम्, तत्र सर्वावयवोपतेद्वादशकपालस्य सर्वफलप्रयोजकत्वे कः सन्देह इति वैश्वानरेष्टि स्तूयत इत्युक्तम्। तत्राष्टाकपालपदं चाग्नोयाष्टाकपाले शक्तम् गौण्या वृत्त्या अष्टत्वाश्रयकपालश्रपिततवसाृश्येन द्वादशकपालवयवे प्रयुज्यते इति स्वीकृतम्। अतः गौण्या वृत्त्या निमित्तानि कानीति विचारार्थ तत्सिद्ध्यधिकरणमिदं प्रवर्तते। अत्र यद्यपि "तत्सिद्धि जातिसारूप्यप्रशंसा भूमलिङ्गसमावया इति गुणाश्रयास्त्र इत्येकपालेनैकमेव सूत्रमस्ति, तथापि सूत्रेऽत्र गुणाश्रयशब्दस्य तत्सिद्ध्यादिदिशब्देषु प्रत्येकं सम्बन्धे सति षड्वाक्यानि सम्पद्यन्ते। तान्यत्र पृगधिकरणरूपेण स्वीकृत्य प्रयोदशादष्टादशाधिकरणं यावदधिकरणषङ्केन गौप्या वृत्त्या निमित्तानि षडत्र दर्ण्यन्ते। एतदधिकरणषट्कमेष तत्सिद्धिपेटिकेत्युच्यते। तत्र तत्सिद्धिरेकं निमित्तम्। "यजमान प्रसारः" इति वाक्यं श्रुतम्। लोके यजमानशब्दः यज्ञानुष्ठातरि प्रसिद्धः। प्रस्तरशब्दश्च दर्भमुष्टौ प्रसिद्धाः। वाक्येऽत्र शब्दयोरुभयोः सामानाधिकरण्यं श्रूयते, एतत्सामानाधिकरण्यं नामत्वेन भवितुमर्हतीति उद्भिदाधिकरणन्यायेन यजमानस्य प्रस्तर इति नामधेयं भवतु, प्रस्तरस्य दा यजमान इति नाम भवतिति वक्तुं न शेक्यते। यतः यजमानश्चेतनः प्रस्तरस्त्वचेतनपदार्थः अतः उभयोनमित्व-मन्यतरस्य न युक्तमतः गुाविधिस्तयापि प्रथमश्रुतत्वादससञ्ज्ञातविरोधी यजमानद्वशः प्रधानभूततः, गुणे त्वन्यामकल्पनेति न्यायेन गुणभूतेप्रस्तरशब्दस्यैव

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लाया तत्कायकरित्वबोधकत्वं स्वीकृत्य यजमाने प्रस्तरकार्यरूपी गुणो विधीयते इति पूर्वपक्षे प्राप्ते

उच्यते–"प्रस्तरे हवींष्यासादयति" "सूक्तवाकेन प्रस्तरं प्रहरति" इति हविषां धारणम्द्द प्रस्तरस्याग्नौ प्रहरणं प्रस्तरस्य कार्य श्रूयते। एतच्च कार्यं यजमाने कर्तुं न शक्यते, यदिदं कार्यं यजमानस्य स्यात्तदा अग्न्याधारकाले पवनेश्चनुष्ठानवसर एवाहवनीये यजमानस्य प्रहरणे सर्वकर्मपरिलोपः स्यादतः यजमानशब्दः प्रस्तरे गौण्या वृत्त्या प्रयुज्यते स्तुत्यर्थमिति स्वीकार्यम्। तन्निमित्तञ्च तत्सिद्धिरर्यात् तत्कार्यकाश्त्विम्, यजमानस्य कार्यं साङ्गप्रधानानुष्ठानम्। यजमानः स्वद्रव्यव्ययेन हविषां धारकः। प्रस्तरकार्यामपि यजमानकार्यमेवेति प्रस्तरे यजमानकार्यकारित्वमस्तीति यजमानवत् क्रतुकार्यनिर्वर्तकत्वात् प्रदास्तः प्रस्तर इति स्तूयते।

अतः यजमानशब्दोऽर्थवाद इति सिद्धक्रन्तः।

चतुर्दशाधिकरण निरूप्यते–

**जैमिनीयन्यायमाला**

**आग्नेयो ब्राह्मणोऽत्रपि पूर्ववत्सर्वनिर्णयः।**
**द्वारन्तु मुखजन्यत्वमाग्नेयतेन संस्तवे।।41।।**

**प्रकाशिका**

अग्निर्वै ब्राह्मणइति श्रूयते। अत्राग्निब्राह्मणयोर्भेदस्य प्रसिद्धत्वात् "प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमिग्न-र्देवतान्वसृज्यत, शेषात् ब्राह्मणेऽग्निशब्दस्य वृत्तो मुखजातत्वं सुनिमित्तम्। सन्देहादिकं पूर्वाधिकरणवदेव भवति।

पञ्चदशाधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**पशवोऽन्ये गवाश्वे भ्योऽपशवो वा इति श्रुतम्।**
**अजादिष्वपशुतां यद्गुणो वादोऽथवास्तु तत्।।42।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्तुत्यभावाद् गुणस्तेषु पशुकार्यनिषेधनम्।**
**अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना।।43।।**

**पशवोऽपशुशब्देन प्राशस्त्याभवसाम्यतः।**
**लक्ष्यास्तत्र निमित्तन्तु प्रशंसैव गवाश्वयोः।।44।।**

## प्रकाशिका

"अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वां इति श्रूयते। अत्र गवाश्वोरेव पशुत्वम्, तद्भिन्नेषु च पशुत्वनिषेधः श्रूयते। एतच्च न युक्तनम् धागादीनानमप्यालम्भो वेदे श्रूयते, अतः अत्र गुणविधिरभवार्थ वद इति सन्देहे गवाश्वल्यतिरिकोषु पशुत्वनिषेधद्वारा गवाश्योः प्रशंसा क्रिँते। गवाश्वयोः प्रशंसां निमित्तीकृत्य तद्भिन्नेषु पशुत्वंनिषिध्यत इति अर्थवादः। न हि निन निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति निन्दान्यायः अत्र प्रवर्तते।

सप्तदशाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**सृष्टीरूपदशधातीति ये मन्त्राः सृष्टिलिङ्गकाः।**
**विधेयास्ते गुणत्वेन वादो वात्र गुणे विधिः।।45।।**

**आख्यान्तेनाभिसम्बन्धादविध्यन्तरयोगातः।**
**लिङ्गप्रकरणप्राप्तेर्मन्त्राणं विध्यसम्भवात्।।46।।**

**ताननूद्येष्ट का धानं विदधँत्स्तोष्यते यतः।**
**यथा सृ.ष्टेत्यनेनातः सृष्टीरित्यर्थवादगी।।47।।**

**एकया स्तुवतेत्यादौ मन्त्रसङ्घं क्वचिन्न हि।**
**सृष्टिशब्दस्तयाप्युक्तिः सृष्टिश्ब्देन भूमतः।।48।।**

## प्रकाशिका

"अग्निं चिन्वीत" इष्टकाभिरग्निंचिनुते" इति वाक्याभ्यां चयनेनाक्षिप्तोपधानस्य इष्टकानाञ्च प्राप्तिर्भवति। एतत्सन्निधौ सृष्टीरूपदधातीति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रूयते। अत्र "ब्रह्मासृज्यत" "भूतान्यसृज्यन्त" इत्यादि सृजिधातुघटितमन्त्रोपधेया इष्टकाः सृष्टय उच्यन्ते। अत्र "सृष्टीरूपदधाी"–त्यनेन किं सृजिमान्तो मन्त्रा गुणरूपेण दिधीयन्त उत अर्थवाद इति सन्देहे सृष्टिाब्दस्याख्यातपकदेन सम्बन्धात् सृजिमन्तो मन्त्रा विधीयन्ते इति पूर्वपक्षे प्राप्ते

उच्यते–अत्र वाक्यमनुवादात्मकमेव; मन्त्राणामपि प्रकर लिङ्गणाभ्यां प्राप्तत्वात् विध्यनुपपत्तेः ।' एकया स्तुवते" "प्रजा अधीयन्तइत्यादिकेचन मन्त्रा सृजिधातुरहिता अपि मन्त्रः प्रकरणेऽत्र पठिता तथापि बहुषु मन्त्रेषु सृजिधातुघटितत्वश्रवणत् बाहुल्यं निमित्तीकृत्य एते मन्याः सर्वे प्रकरणे पठिताः सृष्टिशब्देन स्तूयन्ते अतः अत्र सृष्टिशब्दोऽर्थवाादः। "यथा सृष्टमेवावरुन्धे" इत्यर्थवादोपपत्त्यर्थमत्र सृष्टीरूपदधाति इत्यत्र सृष्टिशब्देनानुवादो युज्यत इति सिद्धान्ताः।

अष्टादशाधिकरणं निरूप्यते–

## जैमिनीयन्यायमाला

**सृष्टिवत्प्राणभृत्तत्र सादृश्यं लिङ्गभूमतः।**
**अत्रैकमन्त्रगो लिङ्गसमवायो विशिष्यते।।49।।**

## प्रकाशिका

"प्राणभृत उपदधाती" ति श्रूयते। अत्रपि "एतस्यै प्राणान् दधाति" इत्यर्थवादस्योपपत्त्ये प्राणभृच्छब्देन लिङ्गप्रकरणप्राप्तमन्त्रानुवादः "प्राणभृत उपदधाती"– ति वाक्येन क्रियते। अयं विशेषः पूर्वत्र बहुषु मन्त्रेषु सृजिधातुघटितत्वमस्तीति सृष्टिशब्देनानुवादे बाहुल्यं निमित्तमत्र तु "अयं पुरोभुवस्तस्य प्राणो भैवायन" इत्येकस्मिन्नेव मन्त्रे प्राणभृत्त्वं श्रूयते तथापि तत्सहचरित मन्त्रा अपि प्राणभृच्छब्देन लक्ष्यन्ते गौण्या वृत्त्या। निमित्तञ्च लिङ्गसम्बन्धः। यथा वनैकदेशे पुष्पिते वनं पुष्पितमिति कथ्यते तथा एकस्मिन्यमन्त्रे प्राणप्रतिपादनसमर्थे विद्यमाने तत्प्रकरणे पठिता मन्त्रा अपि प्राणभृच्छब्देन स्तूयन्ते। अतः अत्र प्राणभच्छब्दोऽर्थवाद इति सिद्धक्रन्तः।

वाक्यशेषधिकरणं निरूप्यते–

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## जैमिनीयन्यायमाला

शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम्।
तैलादिनाञ्जिता अक्ता घृतेनैवाथावाश्रनम्।।50।।

तैलादिनापि मुख्यत्वादसञ्जातविरोधनात्।
अप्राप्तार्थत्वतश्चास्य विधेर्वादाद्बलित्वतः।।51।।

सामान्यमननुष्ठेयं विशेषस्तु विधौ न हि।
घृतेनैवाञ्जनं वाक्यशेषात् सन्दिग्धनिर्णयात्।।52।।

अर्थवादगता चेयं स्तुतिघृतमुपेयुषी।
बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम्।।53।।

## प्रकाशिका

धर्मे विधिमन्त्रार्थवादमधेयेति वेदावयवानां चतुर्ष्णां स्मृतिशिष्टाचरयोइव प्रामाण्यं निरूपितमिदानीं वाक्यशेषस्य प्रामाण्यं कथमिति निरूप्रूत इति प्रमाणाध्यायेन सह सङ्गतिः। यद्यपि अर्थवादानां स्तवकत्वेन प्रामाण्यनिरूपणेनैव वाक्यशेषाणां प्रामाण्ययुक्तमेव तथपि क्वचित् प्रकारान्तेणापि प्रामाण्यमुपपादयितुं शक्यत इति निरूपणार्थ मधिकरणमारब्धम्। नामधेयपादेऽत्र नामधेयापवादत्वेनार्थवादप्रसङ्गादिदमारभ्यत इति पादेन सह सङ्गतिः। काठकचयनप्रकरणे "अक्ताः शर्करा उपदधाति" तेजो वै घृतम्" इति श्रूयते। अत्र मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्करा उच्यन्ते। तामञ्जनं कृत्वा वेद्यामुपधानं विहितम्। अञ्जनञ्च द्रव्यद्रव्येण भवति। द्रवद्रव्याणि घृततैलादिभेदेन नाना। अतः संशयः किं येन केनापि द्रवद्रव्येण अञ्जनं कार्य युत घृतेनैवेति। पूर्वपक्षस्तु "कक्ता शर्करा उपदधाती" तिविधौ तद् द्रवद्रव्यं किमिति न निर्दिष्टमनेन ज्ञायते विधिर्येन केनापि द्रवद्रव्येणाञ्जनमनुमन्यत इति। यद्यपि अर्थवादे घृतस्य स्तुतिर्दृश्यते तथापि उपक्रमगतत्वेन विधेरसञ्जातविरोधित्वेन मुख्यत्वात् अर्थवादगतघृतानुरोधेन तस्य सङ्कोचो न युक्तः विधिबलात् तैलादिनाप्यञ्जनं कर्तुं शक्यत इति अर्थवादगतघृतशब्दस्यैव घृताघृतलक्षकत्वं युक्तमिति पूर्वपो प्राप्ते

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उच्यते विधावत्राजनसाधनीभूतं द्रवद्रयं नोक्तम् सामान्यतः अञ्जसाधनं घृतं तैलमिति सर्वं द्रव्यमनुमन्यते। सामान्ये विधिः प्रवर्तको न भवति, अतः समाप्त्यात्मा विधिः विशेषमपेक्षते तद् यदि तैलादिकं गृह्यते अर्थवादवाक्ये घृतस्य स्तुतिः व्यर्था स्यात्। अतः विध्यर्थयोरेकवाक्यमतया घृतशदानुरोधेन सामान्यविधेः घृतमात्रविषयतमिति निर्णेयमिति सिद्धान्तः।

सम्प्रति सामर्थ्याधिकरणं निरूप्यते–

**जैमिनीयन्यायमाला**

**स्रुवेणथ स्वधितिना हस्तेनावद्यतीत्यमी।**
**आज्ये मांसे पुरोडाशे सङ्कीर्णा वा व्यवथिताः।।54।।**

**व्यवस्थापकराहित्यात् स्रुवाद्या अव्यवस्थिताः।**
**व्यवस्थापकताशक्तेस्तद्वशेन व्यवस्थितिः।।55।।**

**प्रकाशिका**

पूर्वाधिकरणेऽर्थवादावयवस्य स्तावकत्वादन्येनापि प्रकारेण सामान्यविधिनिर्धारकत्वरूपेण प्रामाण्ये प्रतिपादिते विध्यात्मकावभवस्यापि विधायकत्वादन्येनापि प्रकारेण प्रामाण्यं प्रतिपादयितुमिदमधिकरणं प्रवृत्तम्। "स्त्रवेणावद्यति" "हस्तेनावधति" स्वधितिनावद्यति" इति श्रूयते। तत्र निर्धारणभावात् वाक्यशेस्याप्यभावात् येन केनापि साधनेन यत्किमपि द्रव्यमवदेयमिति पूर्वपक्षे प्राप्ते

उच्यते–"स्रुवेणावद्यती" त्यादिविधिषु पूर्ववद्वाक्यः शेषाभावेऽपि पदार्थसामर्थ्याद् द्रवद्रव्यस्याज्यस्य स्रुवेणैवावदानम्, मांसस्य स्वधितिनावदानम्, पुरोडाशस्य हस्तेनावदानम् इति व्यवस्था स्वीकार्या। अत्रार्थगतसामर्थ्यविचार क्रियते, तृतीये तु लिङ्गाधिकरणे शब्दगतसामर्थ्यविचारः इति भेदः। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति न्यायेन अशक्येऽर्थे विध्यसम्भवेन सामर्थ्यानुसारेण सङ्कोच आवश्यकः। न च सामर्थ्यं लिङ्गस्थानीयम् तेनावद्यति श्रुतिसङ्कोचो न युक्त इति वाच्यम्; अशक्यार्थे विधेरसम्भवेन शक्त्या लिङ्गेनाप्यवद्यतिश्रुतेः सङ्कोचस्यावश्यकत्वात्। न

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha



**डॉ. प्रभाकरप्रसादः**

**पितृनाम**-श्रीविश्वनाथभट्टप्रसादः

**जन्मस्थानम्**-गोकर्णक्षेत्रम् (कर्नाटके)

**अध्ययनम्**-चक्रवर्ती/पी-एच.डी.

**कृतयः**

**सम्पादनम्**-शाब्दनिर्णयदीपिका।

**अनुवादः**-व्याप्तिपञ्चकस्य पञ्चमलक्षणस्य।

**लेखा**-विविधासु पत्रिकासु लेखाः प्रकाशिताः।

अयं व्याख्याकारः वेदमूर्त्तीनां श्रीसाम्बदीक्षितानां सन्निधावधीतस्वाध्यायः, काश्यां पण्डितराजादिविरुदभाजां एस्. सुब्रह्मण्यशास्त्रिणां पद्मभूषणश्रीपट्टाभिरामशास्त्रिणां श्री1008 महामण्डलेश्वराणां दिव्यानन्दस्वामिनां श्रीसत्यानन्दस्वामिनां, प्रो. रामकृष्णभट्टानां सविधे कृतवेदान्तमीमांसादिशास्त्राध्ययनः, सम्प्रति 2001 खैस्ताब्दतः श्री ला.ब.शा.रा.सं. विद्यापीठे सहायकाचार्यपदे सेवारतः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

